एवं स तैस्तैर्विषयोपचारैर्वयोऽनुरूपैरुपचर्यमाणः ।
बालोऽप्यबालप्रतिमो बभूव धृत्या च शौचेन धिया श्रिया च ॥२३॥

वयश्च कौमारमतीत्य सम्यक् संप्राप्य काले प्रतिपत्तिकर्म ।
अल्पैरहोभिर्बहुवर्षगम्या जग्राह विद्याः स्वकुलानुरूपाः ॥ २४ ॥

नैःश्रेयसं तस्य तु भव्यमर्थं श्रुत्वा पुरस्तादसितान्महर्षेः ।
कामेषु सङ्गं जनयांबभूव वनानि यायादिति शाक्यराजः ॥ २५ ॥

कुलात्ततोऽस्मै स्थिरशीलयुक्तात्साध्वीं वपुर्ह्रीविनयोपपन्नाम् ।
यशोधरां नाम यशोविशालां वामाभिधानां श्रियमाजुहाव ॥२६॥

विद्योतमानो वपुषा परेण सनत्कुमारप्रतिमः कुमारः ।
सार्धं तया शाक्यनरेन्द्रवध्वा शच्या सहस्राक्ष इवाभिरेमे ॥ २७ ॥

किंचिन्मनःक्षोभकरं प्रतीपं कथं न पश्येदिति सोऽनुचिन्त्य ।
वासं नृपो व्यादिशति स्म तस्मै हर्म्योदरेष्वेव न भूप्रचारम् ॥ २८ ॥

ततः शरत्तोयदपाण्डरेषु भूमौ विमानेष्विव रञ्जितेषु ।
हर्म्येषु सर्वर्तुसुखाश्रयेषु स्त्रीणामुदारैर्विजहार तूर्यैः ॥ २९ ॥

24. ab. madhyaṁ saṁprāpya bālaḥ sa hi rājasūnuḥ (two MSS. omit *b*), Co.; yaṅ-dag-par ḥdu-byed las ni rab-tu-thob-nas dus-su ni, T.

25. ab. doṅ-gyi skal-ba thos-nas (bhāgyam arthaṁ śrutvā), T. d. vṛddhir bhavac chākyakulasya rājñaḥ (two MSS. omit *d*), Co.; nags-su gśegs-par ḥgyur zhes śākyaḥi rgyal-po-yis, T.

26. a. °śīlasaṁyutāt, Co.; tshul-khrims spyod-pa spyan-gyi (read sbyar-gyi ?), T. d. tulyābhidhānāṁ (tāmābhidhānāṁ, two MSS.), Co.; btsun-mor mṅon-par-brjod-paḥi, T.

27. a. athāparaṁ bhūmipateḥ priyo yaṁ (one MS. only in margin, all MSS. have in text pūyāpareṇa, six syllables short), Co.; mchog-gi lus-kyis snaṅ-zhiṅ gsal-ba, T. b. de ñid (sa eva for kumāraḥ), T.

28. b. kathaṁ ca paśyed, Co.; gaṅ-gis mthoṅ mi-ḥgyur, T. c. hy ādiśati, Co.; rnam-par-bstan, T.

कलैर्हि चामीकरबद्धकक्षैर्नारीकराग्राभिहतैर्मृदङ्गैः ।
वराप्सरोनृत्यसमैश्च नृत्यैः कैलासवत्तद्भवनं रराज ॥ ३० ॥
वाग्भिः कलाभिर्ललितैश्च हावैर्मदैः सखेलैर्मधुरैश्च हासैः ।
तं तत्र नार्यो रमयांबभूवुर्भ्रूवञ्चितैरर्धनिरीक्षितैश्च ॥ ३१ ॥
ततः स कामाश्रयपण्डिताभिः स्त्रीभिर्गृहीतो रतिकर्कशाभिः ।
विमानपृष्ठान्न महीं जगाम विमानपृष्ठादिव पुण्यकर्मा ॥ ३२ ॥
नृपस्तु तस्यैव विवृद्धिहेतोस्तद्भाविनार्थेन च चोद्यमानः ।
शमेऽभिरेमे विरराम पापाद्भेजे दमं संविबभाज साधून् ॥ ३३ ॥
नाधीरवत्कामसुखे ससञ्जे न संररञ्जे विषमं जनन्याम् ।
धृत्येन्द्रियाश्वांश्चपलान्विजिग्ये बन्धूंश्च पौरांश्च गुणैर्जिगाय ॥ ३४ ॥
नाध्यैष्ट दुःखाय परस्य विद्यां ज्ञानं शिवं यत्तु तदध्यगीष्ट ।
स्वाभ्यः प्रजाभ्यो हि यथा तथैव सर्वप्रजाभ्यः शिवमाशशंसे ॥ ३५ ॥
भं भासुरं चाङ्गिरसाधिदेवं यथावदानर्च तदायुषे सः ।
जुहाव हव्यान्यकृशे कृशानौ ददौ द्विजेभ्यः कृशनं च गाश्च ॥ ३६ ॥
सस्नौ शरीरं पवितुं मनश्च तीर्थाम्बुभिश्चैव गुणाम्बुभिश्च ।
वेदोपदिष्टं सममात्मजं च सोमं पपौ शान्तिसुखं च हार्दम् ॥ ३७ ॥
सान्त्वं बभाषे न च नार्थवद्यज्जजल्प तत्त्वं न च विप्रियं यत् ।
सान्त्वं ह्यतत्त्वं परुषं च तत्त्वं ह्रियाशकन्नात्मन एव वक्तुम् ॥ ३८ ॥

31. a. hārair (corrected in one MS. to hāvair), Co.; T uncertain.
32. a. tataś ca, Co.; de-nas de ni, T.
36. Fol. 9 of A begins with this verse. a. bhās(?)ura cāṅgir(?)asādhidai-(?de?)vaṁ, A (much rubbed). d. kṛṣanañ ca, A.
37. c. ātmañjañ ca, A; zhi-ba bdag-skyes (śamam ātmajaṁ), T.
38. c. atatva, A. d. hriyāsakan, A.

इष्टेष्वनिष्टेषु च कार्यवत्सु न रागदोषाश्रयतां प्रपेदे ।
शिवं सिषेवे व्यवहारशुद्धं यज्ञं हि मेने न तथा यथा तत् ॥ ३९ ॥
आशावते चाभिगताय सद्यो देयाम्बुभिस्तर्षमचेच्छिदिष्ट ।
युद्धादृते वृत्तपरश्वधेन द्विड्दर्पमुद्वृत्तमबेभिदिष्ट ॥ ४० ॥
एकं विनिन्ये स जुगोप सप्त सप्तैव तत्याज ररक्ष पञ्च ।
प्राप त्रिवर्गं बुबुधे त्रिवर्गं जज्ञे द्विवर्गं प्रजहौ द्विवर्गम् ॥ ४१ ॥
कृतागसोऽपि प्रतिपाद्य वध्यान्नाजीघनन्नापि रुषा ददर्श ।
बबन्ध सान्त्वेन फलेन चैतांस्त्यागोऽपि तेषां ह्यनयाय दृष्टः ॥ ४२ ॥
आर्षाण्यचारीत्परमव्रतानि वैराण्यहासीच्चिरसंभृतानि ।
यशांसि चापद्गुणगन्धवन्ति रजांस्यहार्षीन्मलिनीकराणि ॥ ४३ ॥
न चाजिहीर्षीद्बलिमप्रवृत्तं न चाचिकीर्षीत्परवस्त्वभिध्याम् ।
न चाविवक्षीद्द्विषतामधर्मं न चाविवक्षीद्धृदयेन मन्युम् ॥ ४४ ॥
तस्मिंस्तथा भूमिपतौ प्रवृत्ते भृत्याश्च पौराश्च तथैव चेरुः ।
शमात्मके चेतसि विप्रसन्ने प्रयुक्तयोगस्य यथेन्द्रियाणि ॥ ४५ ॥

39. c. vyavahāralabdhaṁ, A; dge-baḥi tha-sñad gtsaṅ-ma-la, T. d. e.c. Formichi; yathāvat, A; ji-ltar bzhin (yathāvat, yatheva?), T; for C see note in translation.

40. c. °paraśvavena, A; ye-śes-kyi ni sta-re-yis (jñānaparaśvadhena ?), T. d. dvidarppam, A; dgra-bo-rnams-kyi ṅa-rgyal, T.

41. c. bubudhe t(?)ivarggaṁ, A.

42. a. rab-tu-bskyabs-nas (pratipālya), T. b. nājīghanat nāpi, A. cd. caitāṁ tyāgo, A.

43. b. vairāṇy ahāsīṁś cira°, A. c. gunavāndhavanti, A. d. rajāṁsv, A. rnam-par-dor (vyahāsīn, vyahārṣīn?), T.

44. b. na cācikīṣit, A. d. e.c. Finot; na cāvidhakṣīd, A; bzuṅ-ba ma-yin-no (from dhṛ or grah), T; na cādidhakṣid, Co.; na cābibhakṣid, Kielhorn.

45. b. byas (cakruḥ), T. c. samātmake, A; zhi-baḥi bdag-ñid, T.

काले ततश्चारुपयोधरायां यशोधरायां स्वयशोधरायाम् ।
शौद्धोदने राहुसपत्नवक्त्रो जज्ञे सुतो राहुल एव नाम्ना ॥ ४६ ॥

अथेष्टपुत्रः परमप्रतीतः कुलस्य वृद्धिं प्रति भूमिपालः ।
यथैव पुत्रप्रसवे ननन्द तथैव पौत्रप्रसवे ननन्द ॥ ४७ ॥

पुत्रस्य मे पुत्रगतो ममेव स्नेहः कथं स्यादिति जातहर्षः ।
काले स तं तं विधिमाललम्बे पुत्रप्रियः स्वर्गमिवारुरुक्षन् ॥ ४८ ॥

स्थित्वा पथि प्राथमकल्पिकानां राजर्षभाणां यशसान्वितानाम् ।
शुक्लान्यमुक्त्वापि तपांस्यतप्त यज्ञैश्च हिंसारहितैरयष्ट ॥ ४९ ॥

अजाज्वलिष्टाथ स पुण्यकर्मा नृपश्रिया चैव तपःश्रिया च ।
कुलेन वृत्तेन धिया च दीप्तस्तेजः सहस्रांशुरिवोत्सिसृक्षुः ॥ ५० ॥

स्वायंभुवं चार्चिकमर्चयित्वा
जजाप पुत्रस्थितये स्थितश्रीः ।
चकार कर्माणि च दुष्कराणि
प्रजाः सिसृक्षुः क इवादिकाले ॥ ५१ ॥

तत्याज शस्त्रं विममर्श शास्त्रं शमं सिषेवे नियमं विषेहे ।
वशीव कंचिद्विषयं न भेजे पितेव सर्वान्विषयान्ददर्श ॥ ५२ ॥

46. b. yaśodharāyā, A. c. sauddhodane, A.

47. a. athentaputraḥ, A ; de-nas ḥdod-paḥi bu-mṅah, T.

48. a. puta(?tra?)sya, A ; bu-yi, T. mamaiva, A ; bdag bzhin, T. d. ḥdzegs-par-gyur (āruroha?), T.

49. b. rājarṣabhānāṁ, A. yasasānvitānāṁ, A ; grags daṅ sñan-pas mtshan-rnams-kyi (yaśasāṅkitānām), T. d. ayaṣṭaḥ, A.

50. a. ajajvaliṣṭātha, A.

51. b. jajāya putraḥsthitaye (mark over visarga to show error), A. brtan-paḥi dpal-gyis (sthiraśrīḥ?), T.

52. a. vimamarṣa, A. b. samaṁ, A ; ñe-bar zhi-la, T.

बभार राज्यं स हि पुत्रहेतोः पुत्रं कुलार्थं यशसे कुलं तु ।
स्वर्गाय शब्दं दिवमात्महेतोर्धर्मार्थमात्मस्थितिमाचकाङ्क्ष ॥ ५३ ॥

एवं स धर्मं विविधं चकार सद्भिर्निपातं श्रुतितश्च सिद्धम् ।
दृष्ट्वा कथं पुत्रमुखं सुतो मे वनं न यायादिति नाथमानः ॥ ५४ ॥

रिरक्षिषन्तः श्रियमात्मसंस्थां रक्षन्ति पुत्रान् भुवि भूमिपालाः ।
पुत्रं नरेन्द्रः स तु धर्मकामो ररक्ष धर्माद्विषयेषु मुञ्चन् ॥ ५५ ॥

वनमनुपमसत्त्वा बोधिसत्त्वास्तु सर्वे
विषयसुखरसज्ञा जग्मुरुत्पन्नपुत्राः ।
अत उपचितकर्मा रूढमूलेऽपि हेतौ
स रतिमुपसिषेवे बोधिमापन्न यावत् ॥ ५६ ॥

इति बुद्धचरिते महाकाव्येऽन्तःपुरविहारो नाम द्वितीयः सर्गः ॥ २ ॥

53. d. ācakāṁksaṁ, A.

54. b. niyātāṁ, A ; ṅes-thob-paḥi, T. c. katha, A.

55. a. ātmasaṁsthā, A ; bdag-la yaṅ-dag gnas-paḥi dpal, T. d. viṣayesv amuñcan, A ; yul-rnams ḥdor-pa med-par (=A), T ; visayeṣv amuñcat, Co ; 'the king now, having begotten a son, in accordance with his feelings let him throw off all bounds in the five passions ; he only wished him to take pleasure in worldly glory.', C.

56. c. de-phyir (tata?), T. d. zhi-ba ma-thob (śāntim āpan na ?), T.

## CANTO III

ततः कदाचिन्मृदुशाद्वलानि पुंस्कोकिलोन्नादितपादपानि ।
शुश्राव पद्माकरमण्डितानि गीतैर्निबद्धानि स काननानि ॥ १ ॥
श्रुत्वा ततः स्त्रीजनवल्लभानां मनोज्ञभावं पुरकाननानाम् ।
बहिःप्रयाणाय चकार बुद्धिमन्तर्गृहे नाग इवावरुद्धः ॥ २ ॥
ततो नृपस्तस्य निशम्य भावं पुत्राभिधानस्य मनोरथस्य ।
स्नेहस्य लक्ष्म्या वयसश्च योग्यामाज्ञापयामास विहारयात्राम् ॥ ३ ॥
निवर्तयामास च राजमार्गे संपातमार्तस्य पृथग्जनस्य ।
मा भूत्कुमारः सुकुमारचित्तः संविग्नचेता इति मन्यमानः ॥ ४ ॥
प्रत्यङ्गहीनान्विकलेन्द्रियांश्च जीर्णातुरादीन् कृपणांश्च दिक्षु ।
ततः समुत्सार्य परेण साम्ना शोभां परां राजपथस्य चक्रुः ॥ ५ ॥
ततः कृते श्रीमति राजमार्गे श्रीमान्विनीतानुचरः कुमारः ।
प्रासादपृष्ठादवतीर्य काले कृताभ्यनुज्ञो नृपमभ्यगच्छत् ॥ ६ ॥
अथो नरेन्द्रः सुतमागताश्रुः शिरस्युपाघ्राय चिरं निरीक्ष्य ।
गच्छेति चाज्ञापयति स्म वाचा स्नेहान्न चैनं मनसा मुमोच ॥ ७ ॥

1. b. puskokilonnāditapādapāṇi, A. d. śīte nibaddhāni, A ; glu-rnams daṅ ni ṅes-ldan, T. kānanī (corrected marginally to kānanāni), A.

2. d. antagṛhe nāgam ivāvaruddhaḥ, A.

3. a. nṛpaṁ tasya, A.

4. d. iva manyamānaḥ, A ; zhes sems-śiṅ, T.

5. b. dikṣuḥ, A ; phyogs-rnams-su, T.

7. b. nirīkṣyaḥ, A ; rnam-gzigs-nas (vilokya ?), T. d. snehān(?) nu(?) cainaṁ, A.

ततः स जाम्बूनदभाण्डभृद्भिर्युक्तं चतुर्भिर्निभृतैस्तुरङ्गैः ।
अक्लीबविद्वच्छुचिरश्मिधारं हिरण्मयं स्यन्दनमारुरोह ॥ ८ ॥
ततः प्रकीर्णोज्ज्वलपुष्पजालं विषक्तमाल्यं प्रचलत्पताकम् ।
मार्गं प्रपेदे सदृशानुयात्रश्चन्द्रः सनक्षत्र इवान्तरीक्षम् ॥ ९ ॥
कौतूहलात्स्फीततरैश्च नेत्रैर्नीलोत्पलार्धैरिव कीर्यमाणम् ।
शनैः शनै राजपथं जगाहे पौरैः समन्तादभिवीक्ष्यमाणः ॥ १० ॥
तं तुष्टुवुः सौम्यगुणेन केचिद्ववन्दिरे दीप्ततया तथान्ये ।
सौमुख्यतस्तु श्रियमस्य केचिद्वैपुल्यमाशंसिषुरायुषश्च ॥ ११ ॥
निःसृत्य कुब्जाश्च महाकुलेभ्यो व्यूहाश्च कैरातकवामनानाम् ।
नार्यः कृशेभ्यश्च निवेशनेभ्यो देवानुयानध्वजवत्प्रणेमुः ॥ १२ ॥
ततः कुमारः खलु गच्छतीति श्रुत्वा स्त्रियः प्रेष्यजनात्प्रवृत्तिम् ।
दिदृक्षया हर्म्यतलानि जग्मुर्जनेन मान्येन कृताभ्यनुज्ञाः ॥ १३ ॥
ताः स्रस्तकाञ्चीगुणविघ्निताश्च सुप्तप्रबुद्धाकुललोचनाश्च ।
वृत्तान्तविन्यस्तविभूषणाश्च कौतूहलेनानिभृताः परीयुः ॥ १४ ॥
प्रासादसोपानतलप्रणादैः काञ्चीरवैर्नूपुरनिस्वनैश्च ।
वित्रासयन्त्यो गृहपक्षिसङ्घानन्योन्यवेगांश्च समाक्षिपन्त्यः ॥ १५ ॥

8. c. °rasmidhāraṁ, A.

9. a. ḥbras-spos (Peking ed., sbos) me-tog (°puspalājaṁ?), T. b. visakta°, A.

10. b. e.c.; kīryamāṇaḥ, A. c. jagāhai, A. d. abhivīkṣamānaḥ, A; mṅon-par-dgaḥ (abhinandyamānaḥ), T.

11. d. āsasisur, A.

14. a. śrastakāñcīguṇavighnatāś, A.

15. a. °sopāṇa°, A. d. °vegāś ca (on margin °vegāc ca), A; śugs-rnams-las kyaṅ (°vegaiś ca ?), T.

कासांचिदासां तु वराङ्गनानां जातत्वराणामपि सोत्सुकानाम् ।
गतिं गुरुत्वाज्जगृहुर्विशालाः श्रोणीरथाः पीनपयोधराश्च ॥ १६ ॥
शीघ्रं समर्थापि तु गन्तुमन्या गतिं निजग्राह ययौ न तूर्णम् ।
ह्रियाप्रगल्भा विनिगूहमाना रहःप्रयुक्तानि विभूषणानि ॥ १७ ॥
परस्परोत्पीडनपिण्डितानां संमर्दसंक्षोभितकुण्डलानाम् ।
तासां तदा सस्वनभूषणानां वातायनेष्वप्रशमो बभूव ॥ १८ ॥
वातायनेभ्यस्तु विनिःसृतानि परस्परायासितकुण्डलानि ।
स्त्रीणां विरेजुर्मुखपङ्कजानि सक्तानि हर्म्येष्विव पङ्कजानि ॥ १९ ॥
ततो विमानैर्युवतीकरालैः कौतूहलोद्घाटितवातयानैः ।
श्रीमत्समन्तान्नगरं बभासे वियद्विमानैरिव साप्सरोभिः ॥ २० ॥
वातायनानामविशालभावादन्योन्यगण्डार्पितकुण्डलानाम् ।
मुखानि रेजुः प्रमदोत्तमानां बद्धाः कलापा इव पङ्कजानाम् ॥२१॥
तं ताः कुमारं पथि वीक्षमाणाः स्त्रियो बभुर्गामिव गन्तुकामाः ।
ऊर्ध्वोन्मुखाश्चैनमुदीक्षमाणा नरा बभुर्द्यामिव गन्तुकामाः ॥ २२ ॥

16. c. garutvāj jagṛhur viśālā, A.
17. b. nijajagrāha, A. c. ninigūhamānā, A ; rnam-par-sbas-pa, T.
18. b. saṅkhobhita°, A ; bskyod-gyur, T. d. aprasamo, A ; rab-tu-zhi-bar (vātāyaneṣu praśamo), T.
19. d. sakt{i/a}ni, A.
20. a. vimāmo yu° (corrected to vimānau yu°), A. b. vātapānaiḥ, Kern. c. babhāṣe, A ; mdzes-par-gyur, T.
21. b. °kuṇḍo(?a?)lānāṁ, A. c. pamadottamānāṁ, A. d. kapālā (corrected to kalāpā), A.
22. a. tebhyaḥ kumāraṁ pithi, A ; gzhon-nu de-la lam-du . . . de-rnams, T. c. ūrdhonmukhāś cenam, A.

दृष्ट्वा च तं राजसुतं स्त्रियस्ता
जाज्वल्यमानं वपुषा श्रिया च ।
धन्यास्य भार्येति शनैरवोच-
ञ्छुद्धैर्मनोभिः खलु नान्यभावात् ॥ २३ ॥

अयं किल व्यायतपीनबाहू
रूपेण साक्षादिव पुष्पकेतुः ।
त्यक्त्वा श्रियं धर्ममुपैष्यतीति
तस्मिन् हि ता गौरवमेव चक्रुः ॥ २४ ॥

कीर्णं तथा राजपथं कुमारः पौरैर्विनीतैः शुचिधीरवेषैः ।
तत्पूर्वमालोक्य जहर्ष किंचिन्मेने पुनर्भावमिवात्मनश्च ॥ २५ ॥

पुरं तु तत्स्वर्गमिव प्रहृष्टं शुद्धाधिवासाः समवेक्ष्य देवाः ।
जीर्णं नरं निर्ममिरे प्रयातुं संचोदनार्थं क्षितिपात्मजस्य ॥ २६ ॥

ततः कुमारो जरयाभिभूतं दृष्ट्वा नरेभ्यः पृथगाकृतिं तम् ।
उवाच संग्राहकमागतास्थस्तत्रैव निष्कम्पनिविष्टदृष्टिः ॥ २७ ॥

क एष भोः सूत नरोऽभ्युपेतः केशैः सितैर्यष्टिविषक्तहस्तः ।
भ्रूसंवृताक्षः शिथिलानताङ्गः किं विक्रियैषा प्रकृतिर्यदृच्छा ॥२८॥

23. c. sanair avocan, A.

24. d. sauravam (reinked), A.

25. ab. kīrṇṇan taṁthā rājapathāṁ kumāraḥ pauraiḥ vinītaiḥ śucidhīraceṣiḥ (corrected to °ṣaiḥ), A. d. punabhāvam, A.

26. a. suarggam iva prahṛṣṭa, A. b. samavekṣyā vevāḥ (written over deyāḥ apparently), A.

27. a. jarayā vibhūtaṁ, A ; rga-bas zil-non-zhin, T.

28. b. sitai yaṣṭiviśakta°, A. d. vikriyeṣā, A.

इत्येवमुक्तः स रथप्रणेता निवेदयामास नृपात्मजाय ।
संरक्ष्यमप्यर्थमदोषदर्शी तैरेव देवैः कृतबुद्धिमोहः ॥ २९ ॥

रूपस्य हन्त्री व्यसनं बलस्य शोकस्य योनिर्निधनं रतीनाम् ।
नाशः स्मृतीनां रिपुरिन्द्रियाणामेषा जरा नाम ययैष भग्नः ॥३०॥

पीतं ह्यनेनापि पयः शिशुत्वे कालेन भूयः परिसृप्तमुर्व्याम् ।
क्रमेण भूत्वा च युवा वपुष्मान् क्रमेण तेनैव जरामुपेतः ॥ ३१ ॥

इत्येवमुक्ते चलितः स किंचिद्राजात्मजः सूतमिदं बभाषे ।
किमेष दोषो भविता ममापीत्यस्मै ततः सारथिरभ्युवाच ॥ ३२ ॥

आयुष्मतोऽप्येष वयःप्रकर्षो निःसंशयं कालवशेन भावी ।
एवं जरां रूपविनाशयित्रीं जानाति चैवेच्छति चैव लोकः ॥ ३३ ॥

ततः स पूर्वाशयशुद्धबुद्धि-
विस्तीर्णकल्पाचितपुण्यकर्मा ।
श्रुत्वा जरां संविविजे महात्मा
महाशनेर्घोषमिवान्तिके गौः ॥ ३४ ॥

29 b. sa'-skyoṅ bdag-ñid skyes-la (bhūpātmajāya ?), T. d. tair aiva, A.

30. d. jarā ṇama (corrected to nāma in margin), A.

31. b. e.c. Böhtlingk ; parisṛṣṭam, A ; dus-kyis sa-la gñid-log gyur-pa-ste (kālena bhūmau parisuptabhūtam, or bhūyaḥ misunderstood), T. bālena, Gawroński. c. vayuṣmān, A ; lus rab-ldan-paḥi, T.

32. a. evam uktaś, Cappeller ; de skad ces smras (ambiguous), T. cakitaḥ, Speyer ; ḥdar zhiṅ (ambiguous), T. d. de-bzhin ḥdi-la (asmai tathā), T.

33. c. °vināsayitrīṁ, A. d. daṅ mthoṅ-ba ñid (caivekṣati ?), T ; 'the whole world knows this and seeks it', C.

34. a. tataḥ śa, A. c. gzhon-nu (kumāraḥ), T. d. mahāśane ghoṣam ivāntike śauḥ, A ; ba-laṅ bzhin, T.

निःश्वस्य दीर्घं स्वशिरः प्रकम्प्य तस्मिंश्च जीर्णे विनिवेश्य चक्षुः ।
तां चैव दृष्ट्वा जनतां सहर्षां वाक्यं स संविग्न इदं जगाद ॥ ३५ ॥

एवं जरा हन्ति च निर्विशेषं स्मृतिं च रूपं च पराक्रमं च ।
न चैव संवेगमुपैति लोकः प्रत्यक्षतोऽपीदृशमीक्षमाणः ॥ ३६ ॥

एवं गते सूत निवर्तयाश्वान् शीघ्रं गृहाण्येव भवान्प्रयातु ।
उद्यानभूमौ हि कुतो रतिर्मे जराभये चेतसि वर्तमाने ॥ ३७ ॥

अथाज्ञया भर्तृसुतस्य तस्य निवर्तयामास रथं नियन्ता ।
ततः कुमारो भवनं तदेव चिन्तावशः शून्यमिव प्रपेदे ॥ ३८ ॥

यदा तु तत्रैव न शर्म लेभे जरा जरेति प्रपरीक्षमाणः ।
ततो नरेन्द्रानुमतः स भूयः क्रमेण तेनैव बहिर्जगाम ॥ ३९ ॥

अथापरं व्याधिपरीतदेहं त एव देवाः ससृजुर्मनुष्यम् ।
दृष्ट्वा च तं सारथिमाबभाषे शौद्धोदनिस्तद्गतदृष्टिरेव ॥ ४० ॥

स्थूलोदरः श्वासचलच्छरीरः स्रस्तांसबाहुः कृशपाण्डुगात्रः ।
अम्बेति वाचं करुणं ब्रुवाणः परं समाश्रित्य नरः क एषः ॥ ४१ ॥

35. a. sa śiraḥ prakampya, A; raṅ-gi mgo bsgul-zhiṅ, T. b. jīrṇno, A. d. samaṁ vignam idaṁ, A; sems ni khoṅ-du chud-pa de-yis tshig ḥdi smras, T.

36. c. upeti, A.

37. b. śīghra, A. bhavāt prayātu, A. c. kho-bo-la . . . bde-ba (sukhaṁ me ?), T. d. jarābhave, A; rgas-paḥi ḥjigs-pa, T.

38. a. bhṛ(corrected to bha)rtṛsutasya, A; rgyal-poḥi sras-po (rājasutasya), T.

39. d. bahi jagāma, A.

40. b. manuṣya, A.

41. b. e.c. Cowell; śrastāṁśabāhuḥ, A; lag-pa cha-śas zha-zhiṅ (srastāṁśabāhuḥ), T. c. kuruṇaṁ, A. d. samāsṛtya, A; rten (for brten)-nas, T.

ततोऽब्रवीत्सारथिरस्य सौम्य धातुप्रकोपप्रभवः प्रवृद्धः ।
रोगाभिधानः सुमहाननर्थः शक्तोऽपि येनैष कृतोऽस्वतन्त्रः ॥ ४२ ॥
इत्यूचिवान् राजसुतः स भूयस्तं सानुकम्पो नरमीक्षमाणः ।
अस्यैव जातो पृथगेष दोषः सामान्यतो रोगभयं प्रजानाम् ॥ ४३ ॥
ततो बभाषे स रथप्रणेता कुमार साधारण एष दोषः ।
एवं हि रोगैः परिपीड्यमानो रुजातुरो हर्षमुपैति लोकः ॥ ४४ ॥
इति श्रुतार्थः स विषण्णचेताः प्रावेपताम्बूर्मिगतः शशीव ।
इदं च वाक्यं करुणायमानः प्रोवाच किंचिन्मृदुना स्वरेण ॥ ४५ ॥
इदं च रोगव्यसनं प्रजानां पश्यंश्च विस्रम्भमुपैति लोकः ।
विस्तीर्णमज्ञानमहो नराणां हसन्ति ये रोगभयैरमुक्ताः ॥ ४६ ॥
निवर्त्यतां सूत बहिःप्रयाणान्नरेन्द्रसद्मैव रथः प्रयातु ।
श्रुत्वा च मे रोगभयं रतिभ्यः प्रत्याहतं संकुचतीव चेतः ॥ ४७ ॥
ततो निवृत्तः स निवृत्तहर्षः प्रध्यानयुक्तः प्रविवेश वेश्म ।
तं द्विस्तथा प्रेक्ष्य च संनिवृत्तं पर्येषणं भूमिपतिश्चकार ॥ ४८ ॥
श्रुत्वा निमित्तं तु निवर्तनस्य संत्यक्तमात्मानमनेन मेने ।
मार्गस्य शौचाधिकृताय चैव चुक्रोश रुष्टोऽपि च नोग्रदण्डः ॥ ४९ ॥

42. a. śaumya, A. c. romā(originally gā)bhidhānaḥ, A.

43. d. prajāṇām, A.

44. c. rāgaiḥ, A. d. nad thar phyin-na (rujāntago ?), T. upeti, A.

45. a. śrutārtha, A. c. karuṇāyamāṇaḥ, A. d. kiñcit mṛdunā, A; cuṅ-zhig dṅar-baḥi dbyaṅs-kyis (kiṁcin madhunā svareṇa ?), T.

46. a. vyasana, A. b. raṅ-bzhin gnas-śiṅ (svasthaś ca), T. visrambham upeti, A. d. nad-las rnam-par grol-rnams (=rogād vimuktāḥ), T.

47. ab. bahiḥprayāṇāṁ narendrasadmeva, A. d. saṁkuratīva, A.

48. c. prekṣa, A. d. pury āgamam, A; yoṅs-su-gros, T; 'the king asked what was the cause', C.

49. b. sa tyaktam, A; yaṅ-dag ḥdor, T.

भूयश्च तस्मै विदधे सुताय
विशेषयुक्तं विषयप्रचारम् ।
चलेन्द्रियत्वादपि नाम सक्तो
नास्मान्विजह्यादिति नाथमानः ॥ ५० ॥

यदा च शब्दादिभिरिन्द्रियार्थै-
रन्तःपुरे नैव सुतोऽस्य रेमे ।
ततो बहिर्व्यादिशति स्म यात्रां
रसान्तरं स्यादिति मन्यमानः ॥ ५१ ॥

स्नेहाच्च भावं तनयस्य बुद्ध्वा स रागदोषानविचिन्त्य कांश्चित् ।
योग्याः समाज्ञापयति स्म तत्र कलास्वभिज्ञा इति वारमुख्याः ॥५२॥

ततो विशेषेण नरेन्द्रमार्गे स्वलंकृते चैव परीक्षिते च ।
व्यत्यस्य सूतं च रथं च राजा प्रस्थापयामास बहिः कुमारम् ॥५३॥

ततस्तथा गच्छति राजपुत्रे तैरेव देवैर्विहितो गतासुः ।
तं चैव मार्गे मृतमुह्यमानं सूतः कुमारश्च ददर्श नान्यः ॥ ५४ ॥

अथाब्रवीद्राजसुतः स सूतं नरैश्चतुर्भिर्ह्रियते क एषः ।
दीनैर्मनुष्यैरनुगम्यमानो * भूषितश्चाप्यवरुद्यते च ॥ ५५ ॥

50. b. viṣayaprakāraṁ, A ; yul-la rab-tu-spyod-pa, T. c. śakto, A ; chags-bsñams-te, T ; ' rejoicing in worldly things ', C.

51. d. mānyamānaḥ, A ; sems-śiṅ, T.

52. b. e.c ; saṁvegadōṣān, A ; de-la chags-paḥi skyon-rnams (tadrāgadoṣān), T.

53. b. parīkṣyate, A ; yoṅs-su-brtags-pa-la, T.

55. a. atha bravīd, A. b. caturbhi hriyate, A. d. yo bhūṣitoś cāpy, A ; rgyan-gyis brgyan-pa-yin yaṅ (=bhūṣaṇena bhūṣitaś ca), T ; ' magnificently adorned with streamers and all sorts of flowers ', C ; FP omits the phrase.

ततः स शुद्धात्मभिरेव देवैः शुद्धाधिवासैरभिभूतचेताः ।
अवाच्यमप्यर्थमिमं नियन्ता प्रव्याजहारार्थवदीश्वराय ॥ ५६ ॥

बुद्धीन्द्रियप्राणगुणैर्वियुक्तः सुप्तो विसंज्ञस्तृणकाष्ठभूतः ।
संवर्ध्य संरक्ष्य च यत्नवद्भिः प्रियप्रियैस्त्यज्यत एष कोऽपि ॥ ५७ ॥

इति प्रणेतुः स निशम्य वाक्यं संचुक्षुभे किंचिदुवाच चैनम् ।
किं केवलोऽस्यैव जनस्य धर्मः सर्वप्रजानामयमीदृशोऽन्तः ॥ ५८ ॥

ततः प्रणेता वदति स्म तस्मै
सर्वप्रजानामिदमन्तकर्म ।
हीनस्य मध्यस्य महात्मनो वा
सर्वस्य लोके नियतो विनाशः ॥ ५९ ॥

ततः स धीरोऽपि नरेन्द्रसूनुः श्रुत्वैव मृत्युं विषसाद सद्यः ।
अंसेन संश्लिष्य च कूबराग्रं प्रोवाच निह्रादवता स्वरेण ॥ ६० ॥

इयं च निष्ठा नियता प्रजानां
प्रमाद्यति त्यक्तभयश्च लोकः ।
मनांसि शङ्के कठिनानि नृणां
स्वस्थास्तथा ह्यध्वनि वर्तमानाः ॥ ६१ ॥

56. a. tataḥ sya, A.

57. d. priyas tyajyate (two syllables short), A; sdug-pa sdug-pa-rnams-kyis (Weller amends to sdug ma-sdug-pa-rnams-kyis, =priyāpriyais), T.

58. a. niśāmya, A; thos-nas, T. c. chos ḥdi ñid ni skye-ba ḥdi ñid kyaṅ gi ḥam (kim eṣa cāsyaiva janasya dharmaḥ?), T. d. mthar-gyur ḥdi-ḥdra . . . yin-nam-ci (athavedṛśo 'ntaḥ?), T.

59. b. antakarmaḥ, A.

60. b. śrutveva, A. c. aṁśena, A; dpuṅ-pas, T.

61. b. pamādyati, A.

तस्माद्रथः सूत निवर्त्यतां नो विहारभूमेर्न हि देशकालः ।
जानन्विनाशं कथमार्तिकाले सचेतनः स्यादिह हि प्रमत्तः ॥ ६२ ॥

इति ब्रुवाणेऽपि नराधिपात्मजे निवर्तयामास स नैव तं रथम् ।
विशेषयुक्तं तु नरेन्द्रशासनात्स पद्मषण्डं वनमेव निर्ययौ ॥ ६३ ॥

ततः शिवं कुसुमितबालपादपं
परिभ्रमत्प्रमुदितमत्तकोकिलम् ।
विमानवत्स कमलचारुदीर्घिकं
ददर्श तद्वनमिव नन्दनं वनम् ॥ ६४ ॥

वराङ्गनागणकलिलं नृपात्मज-
स्ततो बलाद्वनमतिनीयते स्म तत् ।
वराप्सरोवृतमलकाधिपालयं
नवव्रतो मुनिरिव विघ्नकातरः ॥ ६५ ॥

इति बुद्धचरिते महाकाव्ये संवेगोत्पत्तिर्नाम तृतीयः सर्गः ॥ ३ ।

62. a. ratham, A. b. vihārabhumir nna, A; bdag-cag sa-la rnam-par rgyu-baḥi yul dus min, (=text or A), T. c. śes-nas (jñātvā), T. vināśaṁ kaṁ rttikāle (two syllables short), A; ñam-thag dus-su rnam-par ñams-pa . . . gaṅ ḥdra, T.

63. c. khyad-par ldan-pa-yin yaṅ mi-dbaṅ bstan-pa-las (viśeṣayuktāt tu narendraśāsanāt?), T.

64. c. padma daṅ bcas (sakamala°), T.

65. c. varāpsarovṛttam, A; lha mchog-mas bskor, T.

## CANTO IV

ततस्तस्मात्पुरोद्यानात्कौतूहलचलेक्षणाः ।
प्रत्युज्जग्मुर्नृपसुतं प्राप्तं वरमिव स्त्रियः ॥ १ ॥
अभिगम्य च तास्तस्मै विस्मयोत्फुल्ललोचनाः ।
चक्रिरे समुदाचारं पद्मकोशनिभैः करैः ॥ २ ॥
तस्थुश्च परिवार्यैनं मन्मथाक्षिप्तचेतसः ।
निश्चलैः प्रीतिविकचैः पिबन्त्य इव लोचनैः ॥ ३ ॥
तं हि ता मेनिरे नार्यः कामो विग्रहवानिति ।
शोभितं लक्षणैर्दीप्तैः सहजैर्भूषणैरिव ॥ ४ ॥
सौम्यत्वाच्चैव धैर्याच्च काश्चिदेनं प्रजज्ञिरे ।
अवतीर्णो महीं साक्षाद्गूढांशुश्चन्द्रमा इति ॥ ५ ॥
तस्य ता वपुषाक्षिप्ता निगृहीतं जजृम्भिरे ।
अन्योन्यं दृष्टिभिर्हत्वा शनैश्च विनिशश्वसुः ॥ ६ ॥

1. c. nṛpasuta, A.

2. c. cak(?kr?)ire, A.

3. a. parivāryeṇam, A.

5. a. naumyatvāc, A ; zhi-ba-ñid phyir, T. b. kaścid ainaṁ, A. d. candramā iva, A ; zla-ba . . . bzhin (=A), T ; ' saying the Moon-god had come ', C.

6. c. anyonyān dṛṣṭibhir ggatvā, A ; phan-tshun mig-rnams-kyis bsnun-nas, T.

एवं ता दृष्टिमात्रेण नार्यो ददृशुरेव तम् ।
न व्याजह्रुर्न जहसुः प्रभावेणास्य यन्त्रिताः ॥ ७ ॥

तास्तथा तु निरारम्भा दृष्ट्वा प्रणयविक्लवाः ।
पुरोहितसुतो धीमानुदायी वाक्यमब्रवीत् ॥ ८ ॥

सर्वाः सर्वकलाज्ञाः स्थ भावग्रहणपण्डिताः ।
रूपचातुर्यसंपन्नाः स्वगुणैर्मुख्यतां गताः ॥ ९ ॥

शोभयेत गुणैरेभिरपि तानुत्तरान् कुरून् ।
कुवेरस्यापि चाक्रीडं प्रागेव वसुधामिमाम् ॥ १० ॥

शक्ताश्चालयितुं यूयं वीतरागानृषीनपि ।
अप्सरोभिश्च कलितान् ग्रहीतुं विबुधानपि ॥ ११ ॥

भावज्ञानेन हावेन रूपचातुर्यसंपदा ।
स्त्रीणामेव च शक्ताः स्थ संरागे किं पुनर्नृणाम् ॥ १२ ॥

तासामेवंविधानां वो वियुक्तानां स्वगोचरे ।
इयमेवंविधा चेष्टा न तुष्टोऽस्म्यार्जवेन वः ॥ १३ ॥

7. b. dadṛsur, A. c. dgaḥ-med-par (na jahṛsuḥ), T. d. prabhāvenāsya, A.

9. a. sarvvakalājñā, A. d. mukhyataṅ gatāḥ, A.

10. a. e.c. Kern; śobhayata, A, mdzes-te (śobhayatha?), T. c. ca krīḍam, A; skyed-tshal daṅ, T.

11. cd. apsarobhi kalitā gṛhītum (one syllable short), A; lha-mo-rnams-kyis śes-pa-yi . . . len-par-ro, T.

12. b. e c.; cāturyārūpa°, A; mdzaṅs daṅ gzugs ni phun-tshogs-pas, T. c. strīṇam, A. śaktā, A.

13. b. rab-sbyar-ba (prayuktānām), T; niyuktānāṁ, Co. c. coṣt°, A. d. āryavena, A.

इदं नववधूनां वो ह्रीनिकुञ्चितचक्षुषाम् ।
सदृशं चेष्टितं हि स्यादपि वा गोपयोषिताम् ॥ १४ ॥
यदपि स्यादयं धीरः श्रीप्रभावान्महानिति ।
स्त्रीणामपि महत्तेज इतः कार्योऽत्र निश्चयः ॥ १५ ॥
पुरा हि काशिसुन्दर्या वेशवध्वा महानृषिः ।
ताडितोऽभूत्पदा व्यासो दुर्धर्षो देवतैरपि ॥ १६ ॥
मन्थालगौतमो भिक्षुर्जङ्घया वारमुख्यया ।
पिप्रीषुश्च तदर्थार्थं व्यसून्निरहरत्पुरा ॥ १७ ॥
गौतमं दीर्घतपसं महर्षिं दीर्घजीविनम् ।
योषित्संतोषयामास वर्णस्थानावरा सती ॥ १८ ॥
ऋष्यशृङ्गं मुनिसुतं तथैव स्त्रीष्वपण्डितम् ।
उपायैर्विविधैः शान्ता जग्राह च जहार च ॥ १९ ॥
विश्वामित्रो महर्षिश्च विगाढोऽपि महत्तपः ।
दश वर्षाण्यहर्मेने घृताच्याप्सरसा हृतः ॥ २० ॥

14. b. hrīvikuñcita°, Böhtlingk.

15. a. yady api, A; gaṅ-yaṅ, T. dpaḥ-ba (vīraḥ), T. d. iti kāryo, A; de-phyir . . . bya, T.

16. a. puro hi, A. c. padā bhyā (?vyā?)so, A; draṅ-sroṅ rgyas-pa rkaṅ-pas, T.

17. a. mānthala°, T. °gotamo, A. b. bhikṣu jaṅghayā, A.

18. a. gotamaṁ, A. mun riṅ-miṅ (dīrghatamasaṁ), T; 'practising long penance', C. b. maharṣaṁ, A.

19. a. ṛṣyaśṛṅga, A. thub-pa mchog (munivaram), T; 'the muni's son', C.

20. b. e.c.; mahattapāḥ, A; brtul-zhugs chen-po bstan-pa yaṅ (vigāḍho 'pi mahāvratam, or °vrataḥ), T. c. aha mene, A; ñi-mar śes, T.

एवमादीनृषींस्तांस्ताननयन्विक्रियां स्त्रियः ।
ललितं पूर्ववयसं किं पुनर्नृपतेः सुतम् ॥ २१ ॥
तदेवं सति विश्रब्धं प्रयतध्वं तथा यथा ।
इयं नृपस्य वंशश्रीरितो न स्यात्पराङ्मुखी ॥ २२ ॥
या हि काश्चिद्युवतयो हरन्ति सदृशं जनम् ।
निकृष्टोत्कृष्टयोर्भावं या गृह्णन्ति ता तु स्त्रियः ॥ २३ ॥
इत्युदायिवचः श्रुत्वा ता विद्धा इव योषितः ।
समारुरुहुरात्मानं कुमारग्रहणं प्रति ॥ २४ ॥
ता भ्रूभिः प्रेक्षितैर्हावैर्हसितैर्लडितैर्गतैः ।
चक्रुराक्षेपिकाश्चेष्टा भीतभीता इवाङ्गनाः ॥ २५ ॥
राज्ञस्तु विनियोगेन कुमारस्य च मार्दवात् ।
जहुः क्षिप्रमविश्रम्भं मदेन मदनेन च ॥ २६ ॥
अथ नारीजनवृतः कुमारो व्यचरद्वनम् ।
वासितायूथसहितः करीव हिमवद्वनम् ॥ २७ ॥
स तस्मिन् कानने रम्ये जज्वाल स्त्रीपुरःसरः ।
आक्रीड इव विभ्राजे विवस्वानप्सरोवृतः ॥ २८ ॥

21. a. evaṃ mayādīn (one syllable in excess), A; T omits evaṃ. b. vikriyān(?yā?) striyaḥ, A. d. puna nṛpateḥ, A.

23. a. yuvataye, A. b. śadṛśañ, A.

25. a. prekṣate hāvair, A; lta daṅ sgeg, T. b. rol (lalitair), T.

27. b. vyavacarad, A. c. vāsitayūtha°, A; gliṅ-moḥi tshogs, T.

28. c. vaibhrāje, Kern. d. 'Just as Śakra, the king of the gods' (=Marutvān?), C.

मदेनावर्जिता नाम तं काश्चित्तत्र योषितः ।
कठिनैः पस्पृशुः पीनैः संहतैर्वल्गुभिः स्तनैः ॥ २९ ॥

स्रस्तांसकोमलालम्बमृदुबाहुलताबला ।
अनृतं स्खलितं काचित्कृत्वैनं सस्वजे बलात् ॥ ३० ॥

काचित्ताम्राधरोष्ठेन मुखेनासवगन्धिना ।
विनिशश्वास कर्णेऽस्य रहस्यं श्रूयतामिति ॥ ३१ ॥

काचिदाज्ञापयन्तीव प्रोवाचार्द्रानुलेपना ।
इह भक्तिं कुरुष्वेति हस्तसंश्लेषलिप्सया ॥ ३२ ॥

मुहुर्मुहुर्मदव्याजस्रस्तनीलांशुकापरा ।
आलक्ष्यरशना रेजे स्फुरद्विद्युदिव क्षपा ॥ ३३ ॥

काश्चित्कनककाञ्चीभिर्मुखराभिरितस्ततः ।
बभ्रमुर्दर्शयन्त्योऽस्य श्रोणीस्तन्वंशुकावृताः ॥ ३४ ॥

चूतशाखां कुसुमितां प्रगृह्यान्या ललम्बिरे ।
सुवर्णकलशप्रख्यान्दर्शयन्त्यः पयोधरान् ॥ ३५ ॥

29. ab. rnam-par sgeg-bcas gzhon-nu-ma rgyags-pas rna-yaṅs (ma-gyeṅs, Weller e.c.) de-rnams ḥgaḥ (=savilāsā yoṣito madenānāyatās tāḥ kāścit), T. c. kaṭhinai, A. d. e.c.; saṁghatair, A; lḥan-cig-paḥi (sahitair), T.

30. a. śrastāṁśa°, A; dpuṅ-pa-las brul, T. c. khalitaṅ, A. d. kṛtve-naṁ, A.

31. b. āśavagandhinā, A. d. rahasya, A. stod-cig ces(stūyatām iti), T.

32. d. e.c.; hastasaṁśliṣyalipsayā, A; rgod daṅ ḥkhyud daṅ ḥdod-pas ni (hāsasaṁśleṣalipsayā), T.

33. b. °śrasta°, A. c. °rasanā, A; ska-rags phan-tshun sdud-pa ni (raśanā . . . ), T.

34. a. °kāñcībhi, A.

35. d. darśayantya, A.

काचित्पद्मवनादेत्य सपद्मा पद्मलोचना ।
पद्मवक्त्रस्य पार्श्वेऽस्य पद्मश्रीरिव तस्थुषी ॥ ३६ ॥

मधुरं गीतमन्वर्थं काचित्साभिनयं जगौ ।
तं स्वस्थं चोदयन्तीव वञ्चितोऽसीत्यवेक्षितैः ॥ ३७ ॥

शुभेन वदनेनान्या भ्रूकार्मुकविकर्षिणा ।
प्रावृत्यानुचकारास्य चेष्टितं धीरलीलया ॥ ३८ ॥

पीनवल्गुस्तनी काचिद्धासाघूर्णितकुण्डला ।
उच्चैरवजहासैनं समाप्नोतु भवानिति ॥ ३९ ॥

अपयान्तं तथैवान्या बबन्धुर्माल्यदामभिः ।
काश्चित्साक्षेपमधुरैर्जगृहुर्वचनाङ्कुशैः ॥ ४० ॥

प्रतियोगार्थिनी काचिद्गृहीत्वा चूतवल्लरीम् ।
इदं पुष्पं तु कस्येति पप्रच्छ मदविक्लवा ॥ ४१ ॥

काचित्पुरुषवत्कृत्वा गतिं संस्थानमेव च ।
उवाचैनं जितः स्त्रीभिर्जय भो पृथिवीमिमाम् ॥ ४२ ॥

अथ लोलेक्षणा काचिज्जिघ्रन्ती नीलमुत्पलम् ।
किंचिन्मदकलैर्वाक्यैर्नृपात्मजमभाषत ॥ ४३ ॥

38. c. bskor-nas . . . rjes-ḥdoṅ (?ḥdod?) byas (*vṛtyānucacāra?), T; prākṛtyā°, Böhtlingk; pranṛtyā°, Formichi; ākṛtyā°, Speyer; vyāvṛtyā°, Cappeller.

39. c. avajahāsenaṁ, A.

40. a. tāthaivānyā, A.

41. c. puṣpaṁ nu, Cappeller.

42. c. uvācenaṁ, A.

43. b. kācid jighrantī, A.

पश्य भर्तश्चितं चूतं कुसुमैर्मधुगन्धिभिः ।
हेमपञ्जररुद्धो वा कोकिलो यत्र कूजति ॥ ४४ ॥
अशोको दृश्यतामेष कामिशोकविवर्धनः ।
रुवन्ति भ्रमरा यत्र दह्यमाना इवाग्निना ॥ ४५ ॥
चूतयष्ट्या समाश्लिष्टो दृश्यतां तिलकद्रुमः ।
शुक्लवासा इव नरः स्त्रिया पीताङ्गरागया ॥ ४६ ॥
फुल्लं कुरुबकं पश्य निर्भुक्तालक्तकप्रभम् ।
यो नखप्रभया स्त्रीणां निर्भर्त्सित इवानतः ॥ ४७ ॥
बालाशोकश्च निचितो दृश्यतामेष पल्लवैः ।
योऽस्माकं हस्तशोभाभिर्लज्जमान इव स्थितः ॥ ४८ ॥
दीर्घिकां प्रावृतां पश्य तीरजैः सिन्दुवारकैः ।
पाण्डुरांशुकसंवीतां शयानां प्रमदामिव ॥ ४९ ॥
दृश्यतां स्त्रीषु माहात्म्यं चक्रवाको ह्यसौ जले ।
पृष्ठतः प्रेष्यवद्भार्यामनुवर्त्यनुगच्छति ॥ ५० ॥
मत्तस्य परपुष्टस्य रुवतः श्रूयतां ध्वनिः ।
अपरः कोकिलोऽन्वक्षं प्रतिश्रुत्केव कूजति ॥ ५१ ॥

44. a. bhattaś citaṁ, A.
45. b. °vivaddhanah, A. d. dahyamānām ivā°, A.
46. a. samāśiṣṭo, A ; yaṅ-dag ḥkhyed, T.
47. d. nirbhatsita ivānabhaḥ, A ; rma-phab-gyur-te dud-pa ḥdra, T.
48. d. sthitiḥ, A.
49. b. e.c. Cowell ; sinduvārajaiḥ, A.
50. b. cakravākā, A. d. anuvṛrttyānu°, A ; rjes-ḥjug, T ; anuvṛtyānu°, Co.
51. b. ruvata, A. dhaniḥ, A. c. kokilo nutkaḥ, A ; khu-byug mnon-sum-du, T. d. kūjita, A.

अपि नाम विहङ्गानां वसन्तेनाहृतो मदः ।
न तु चिन्तयतोऽचिन्त्यं जनस्य प्राज्ञमानिनः ॥ ५२ ॥

इत्येवं ता युवतयो मन्मथोद्दामचेतसः ।
कुमारं विविधैस्तैस्तैरुपचक्रमिरे नयैः ॥ ५३ ॥

एवमाक्षिप्यमाणोऽपि स तु धैर्यावृतेन्द्रियः ।
मर्तव्यमिति सोद्वेगो न जहर्ष न विव्यथे ॥ ५४ ॥

तासां तत्त्वेऽनवस्थानं दृष्ट्वा स पुरुषोत्तमः ।
समं विग्नेन धीरेण चिन्तयामास चेतसा ॥ ५५ ॥

किं विमा नावगच्छन्ति चपलं यौवनं स्त्रियः ।
यतो रूपेण संमत्तं जरा यन्नाशयिष्यति ॥ ५६ ॥

नूनमेता न पश्यन्ति कस्यचिद्रोगसंभवम् ।
तथा हृष्टा भयं त्यक्त्वा जगति व्याधिधर्मिणि ॥ ५७ ॥

अनभिज्ञाश्च सुव्यक्तं मृत्योः सर्वापहारिणः ।
ततः स्वस्था निरुद्विग्नाः क्रीडन्ति च हसन्ति च ॥ ५८ ॥

जरां व्याधिं च मृत्युं च को हि जानन्सचेतनः ।
स्वस्थस्तिष्ठेन्निषीदेद्वा शयेद्वा किं पुनर्हसेत् ॥ ५९ ॥

52. c. cintayataś cittaṁ, A ; bsams-pa-min sems, T.

54. a. ākṣipyamāno, A. d. na jaharsa na sismiye, A ; dgaḥ daṅ ḥjigs-pa med-par-gyur, T ; 'neither grieved nor rejoiced', C.

55. a. bh(?)āsān tatve'nava°, A. c. sasaṁvignena, A : mñam-la skyo, T.

56. c. rūpeṇa sampannaṁ, A ; gzugs-kyis myos-pa ni, T. d. jareyan nāśa°, A ; gaṅ-zhig rga-bas, T.

57. d. °dharmmiṇiḥ, A.

59. a. jarā, A. c. svastha, A. d. suped vā, A ; ñal-byed, T.

यस्तु दृष्ट्वा परं जीर्णं व्याधितं मृतमेव च ।
स्वस्थो भवति नोद्विग्नो यथाचेतास्तथैव सः ॥ ६० ॥
वियुज्यमाने हि तरौ पुष्पैरपि फलैरपि ।
पतति च्छिद्यमाने वा तरुरन्यो न शोचते ॥ ६१ ॥
इति ध्यानपरं दृष्ट्वा विषयेभ्यो गतस्पृहम् ।
उदायी नीतिशास्त्रज्ञस्तमुवाच सुहृत्तया ॥ ६२ ॥
अहं नृपतिना दत्तः सखा तुभ्यं क्षमः किल ।
यस्मात्त्वयि विवक्षा मे तया प्रणयवत्तया ॥ ६३ ॥
अहितात्प्रतिषेधश्च हिते चानुप्रवर्तनम् ।
व्यसने चापरित्यागस्त्रिविधं मित्रलक्षणम् ॥ ६४ ॥
सोऽहं मैत्रीं प्रतिज्ञाय पुरुषार्थात्पराङ्मुखः ।
यदि त्वा समुपेक्षेय न भवेन्मित्रता मयि ॥ ६५ ॥
तद्ब्रवीमि सुहृद्भूत्वा तरुणस्य वपुष्मतः ।
इदं न प्रतिरूपं ते स्त्रीष्वदाक्षिण्यमीदृशम् ॥ ६६ ॥
अनृतेनापि नारीणां युक्तं समनुवर्तनम् ।
तद्व्रीडापरिहारार्थमात्मरत्यर्थमेव च ॥ ६७ ॥

61. a. e.c. Gawroński ; viyujyamāne pi, A ; T omits api. d. mdzes-pa byed-ma-yin (na śobhate), T ; 'does not know fear', C.

63. b. tubhyaṁ ksaḥ kilaḥ (one syllable short), A ; khyod-la . . . nus-pa lo (amended by Weller to ḥo, unnecessarily), T.

64. c. vyasane vāpari°, A ; sdug-pa-na yaṅ, T. d. yoṅs-rdzogs śes-kyi mtshan ñid-do (paryāptamitralakṣaṇam), T ; 'a friend has three characteristics', C.

65. a. maitrī, A. b. parāṅmukhaṁ, A ; T ambiguous ; 'if I should renounce the duty of a *puruṣa*', C. d. na bhave mitratā, A ; grogs-po-ñid kyaṅ ma-yin-no (na bhaven mitratām api !), T.

67. b. yukta, A. c. de-yi ṅo-tshaḥi rgod don (tadvrīḍāparihāsārtham), T. d. °ratyandham (or °anvam), A ; dgaḥ-baḥi don-ñid-du, T.

संनतिश्चानुवृत्तिश्च स्त्रीणां हृदयबन्धनम् ।
स्नेहस्य हि गुणा योनिर्मानकामाश्च योषितः ॥ ६८ ॥
तदर्हसि विशालाक्ष हृदयेऽपि पराङ्मुखे ।
रूपस्यास्यानुरूपेण दाक्षिण्येनानुवर्तितुम् ॥ ६९ ॥
दाक्षिण्यमौषधं स्त्रीणां दाक्षिण्यं भूषणं परम् ।
दाक्षिण्यरहितं रूपं निष्पुष्पमिव काननम् ॥ ७० ॥
किं वा दाक्षिण्यमात्रेण भावेनास्तु परिग्रहः ।
विषयान्दुर्लभाँल्लब्ध्वा न ह्यवज्ञातुमर्हसि ॥ ७१ ॥
कामं परमिति ज्ञात्वा देवोऽपि हि पुरंदरः ।
गौतमस्य मुनेः पत्नीमहल्यां चकमे पुरा ॥ ७२ ॥
अगस्त्यः प्रार्थयामास सोमभार्यां च रोहिणीम् ।
तस्मात्तत्सदृशीं लेभे लोपामुद्रामिति श्रुतिः ॥ ७३ ॥
उतथ्यस्य च भार्यायां ममतायां महातपः ।
मारुत्यां जनयामास भरद्वाजं बृहस्पतिः ॥ ७४ ॥
बृहस्पतेर्महिष्यां च जुह्वत्यां जुह्वतां वरः ।
बुधं विबुधकर्माणं जनयामास चन्द्रमाः ॥ ७५ ॥

68. b. strīṇā, A.

70. a. oṣadhaṁ, A.

71. a. mkhas-paḥi raṅ-bzhin-gyis (dākṣinyabhāvena, or °mayena?), T. c. durllabhāl, A.

72. a. param ita, A ; mchog ces, T. c. gotamasya mune, A.

74. a. ūtasthyasya, A ; ubhathya-yi, T. b. e.c. Cowell ; samatāyām, A ; mthun-ma-la (saṁmatāyāṁ), T.

75. c. vibudhadharmmāṇaṁ, A ; lha-yi las-byed, T.

कालीं चैव पुरा कन्यां जलप्रभवसंभवाम् ।
जगाम यमुनातीरे जातरागः पराशरः ॥ ७६ ॥

मातङ्गामक्षमालायां गर्हितायां रिरंसया ।
कपिञ्जलादं तनयं वसिष्ठोऽजनयन्मुनिः ॥ ७७ ॥

ययातिश्चैव राजर्षिर्वयस्यपि विनिर्गते ।
विश्वाच्याप्सरसा सार्धं रेमे चैत्ररथे वने ॥ ७८ ॥

स्त्रीसंसर्गं विनाशान्तं पाण्डुर्ज्ञात्वापि कौरवः ।
माद्रीरूपगुणाक्षिप्तः सिषेवे कामजं सुखम् ॥ ७९ ॥

करालजनकश्चैव हृत्वा ब्राह्मणकन्यकाम् ।
अवाप भ्रंशमप्येवं न तु सेजे न मन्मथम् ॥ ८० ॥

एवमाद्या महात्मानो विषयान् गर्हितानपि ।
रतिहेतोर्बुभुजिरे प्रागेव गुणसंहितान् ॥ ८१ ॥

त्वं पुनर्न्यायतः प्राप्तान् बलवान्रूपवान्युवा ।
विषयानवजानासि यत्र सक्तमिदं जगत् ॥ ८२ ॥

इति श्रुत्वा वचस्तस्य श्लक्ष्णमागमसंहितम् ।
मेघस्तनितनिर्घोषः कुमारः प्रत्यभाषत ॥ ८३ ॥

76. c. yamunaḥi gliṅ-du (yamunādvīpe?), T.

77. a. gnod-sbyin ḥphreṅ-ma (yakṣamālāyāṁ), T. b. garhitāyā, A.

79. a. °saṁsargga, A.

80. c. bhraṁsam, A. ñid . . . kyaṅ (apy eva), T.

81. a. evamādīn, A; de-la sogs-pa bdag-ñid chen, T; 'thus all these many persons', C. b. marhitān api, A.

82. a. puna, A. d. ida, A.

83. b. °sahitaṁ, A; bcas (=A), T. d. pratyabhāṣataḥ, A.

उपपन्नमिदं वाक्यं सौहार्दव्यञ्जकं त्वयि ।
अत्र च त्वानुनेष्यामि यत्र मा दुष्टु मन्यसे ॥ ८४ ॥
नावजानामि विषयान् जाने लोकं तदात्मकम् ।
अनित्यं तु जगन्मत्वा नात्र मे रमते मनः ॥ ८५ ॥
जरा व्याधिश्च मृत्युश्च यदि न स्यादिदं त्रयम् ।
ममापि हि मनोज्ञेषु विषयेषु रतिर्भवेत् ॥ ८६ ॥
नित्यं यद्यपि हि स्त्रीणामेतदेव वपुर्भवेत् ।
दोषवत्स्वपि कामेषु कामं रज्येत मे मनः ॥ ८७ ॥
यदा तु जरयापीतं रूपमासां भविष्यति ।
आत्मनोऽप्यनभिप्रेतं मोहात्तत्र रतिर्भवेत् ॥ ८८ ॥
मृत्युव्याधिजराधर्मा मृत्युव्याधिजरात्मभिः ।
रममाणो ह्यसंविग्नः समानो मृगपक्षिभिः ॥ ८९ ॥
यदप्यात्थ महात्मानस्तेऽपि कामात्मका इति ।
संवेगोऽत्रैव कर्तव्यो यदा तेषामपि क्षयः ॥ ९० ॥
माहात्म्यं न च तन्मन्ये यत्र सामान्यतः क्षयः ।
विषयेषु प्रसक्तिर्वा युक्तिर्वा नात्मवत्तया ॥ ९१ ॥

86. d. rati bhavet, A.

87. cd. sasamvitkasya kāmesu tathāpi na ratiḥ kṣamā, A; skyon-ldan ḥdod-pa-rnams-la yaṅ kho-boḥi sems ni ḥdod-la phyogs, T; ‘though the lusts have their faults, still they might hold the feelings of man’, C.

88. d. mohā tatra, A.

89. a. e.c. Cowell; °dharmmo, A. c. e.c. Lüders; ramamāno py, A: T omits api.

90. c. saṁvego tra karttavyo (one syllable short), A; ḥdir ni skyo-bar bya-ba-ste, T; ‘that also can cause *saṁvega*’, C.

91. a. na ca tan madhye, A; mi-sems-te (omitting ca tat), T. b. sāmanyataḥ, A; ci-las (=kutaścit?), T. c. praśaktir, A; chags-pa, T.

यद्प्यात्थानृतेनापि स्त्रीजने वर्त्यतामिति ।
अनृतं नावगच्छामि दाक्षिण्येनापि किंचन ॥ ९२ ॥

न चानुवर्तनं तन्मे रुचितं यत्र नार्जवम् ।
सर्वभावेन संपर्को यदि नास्ति धिगस्तु तत् ॥ ९३ ॥

अधृतेः श्रद्दधानस्य सक्तस्यादोषदर्शिनः ।
किं हि वञ्चयितव्यं स्याज्जातरागस्य चेतसः ॥ ९४ ॥

वञ्चयन्ति च यद्येवं जातरागाः परस्परम् ।
ननु नैव क्षमं द्रष्टुं नराः स्त्रीणां नृणां स्त्रियः ॥ ९५

तदेवं सति दुःखार्तं जरामरणभागिनम् ।
न मां कामेष्वनार्येषु प्रतारयितुमर्हसि ॥ ९६ ॥

अहोऽतिधीरं बलवच्च ते मन-
श्चलेषु कामेषु च सारदर्शिनः ।
भयेऽतितीव्रे विषयेषु सज्जसे
निरीक्षमाणो मरणाध्वनि प्रजाः ॥ ९७ ॥

अहं पुनर्भीरुरतीवविक्लवो
जराविपद्व्याधिभयं विचिन्तयन् ।
लभे न शान्तिं न धृतिं कुतो रतिं
निशामयन्दीप्तमिवाग्निना जगत् ॥ ९८ ॥

92. d. kiñcan, A. mkhas-pa-yis dpe-brjod ciṅ (=dākṣiṇyenāpy abhidadhat, udāharan), T.

94. a. anṛteḥ, A; mi-brtan-pa-yi, T. b. e.c. Cowell; śaktasyā°, A; skyon-du mthoṅ-baḥi nus-pa-yi (śaktasya doṣadarśinaḥ), T.

95. a. yady eva, A; gal-te de-ltar, T. c. neva, A, ñid ma-yin, T.

96. a. śati, A. c. kāmeṣu nāryeṣu, A; ḥphags-miṅ ḥdod-pa-la, T.

97. c. bhaye pi tīvre, A; śin-tu rno-zhiṅ ḥjigs-paḥi, T.

98. a. puna bhīrur, A. d. niśāmayaṁ, A.

असंशयं मृत्युरिति प्रजानतो
  नरस्य रागो हृदि यस्य जायते ।
अयोमयीं तस्य परैमि चेतनां
  महाभये रज्यति यो न रोदिति ॥ ९९ ॥

अथो कुमारश्च विनिश्चयात्मिकां
  चकार कामाश्रयघातिनीं कथाम् ।
जनस्य चक्षुर्गमनीयमण्डलो
  महीधरं चास्तमियाय भास्करः ॥ १०० ॥

ततो वृथाधारितभूषणस्रजः
  कलागुणैश्च प्रणयैश्च निष्फलैः ।
स्व एव भावे विनिगृह्य मन्मथं
  पुरं ययुर्भग्नमनोरथाः स्त्रियः ॥ १०१ ॥

ततः पुरोद्यानगतां जनश्रियं
  निरीक्ष्य सायं प्रतिसंहृतां पुनः ।
अनित्यतां सर्वगतां विचिन्तय-
  न्विवेश धिष्ण्यं क्षितिपालकात्मजः ॥ १०२ ॥

99. c. paremi, A. d. ṃahābhaye rakṣati yo na r(?c?)odati, A; ḥjigs-pa che-la chags-pa gaṅ-zhig ṅu-ba-med, T.

101. c. e.c.; sa eva bhāve viniguhya manmathaṁ, A; raṅ-gi sems-la yid-dkrugs ḥdod-pa rnam-smad-nas (=sve bhāve vigarhya manmathaṁ), T. d. yayu bhagna°, A.

102. a. janastriyaṁ, A; skye-boḥi dpal, T. b. sāye(?), A d. slar yaṅ mi-skyoṅ bdag-skyes (kṣitipātmajaḥ punaḥ), T.

ततः श्रुत्वा राजा विषयविमुखं तस्य तु मनो
नं शिश्ये तां रात्रिं हृदयगतशल्यो गज इव ।
अथ श्रान्तो मन्त्रे बहुविविधमार्गे ससचिवो
न सोऽन्यत्कामेभ्यो नियमनमपश्यत्सुतमतेः ॥१०३॥

इति बुद्धचरिते महाकाव्ये स्त्रीविघातनो नाम चतुर्थः सर्गः ॥ ४ ॥

103. b. hṛdayaśatyo gaja (two syllables short), A; sñiṅ-la soṅ-baḥi zug-la glaṅ-chen, T. c. sṅags maṅ rnam-pa sna-tshogs lam-rnams-dag-gis (mantrair bahuvividhamārgaiḥ), T.

Colophon. Iti repeated at end of 103 and beginning of colophon.

# CANTO V

स तथा विषयैर्विलोभ्यमानः परमार्हैरपि शाक्यराजसूनुः ।
न जगाम धृतिं न शर्म लेभे हृदये सिंह इवातिदिग्धविद्धः ॥ १ ॥
अथ मन्त्रिसुतैः क्षमैः कदाचित्सखिभिश्चित्रकथैः कृतानुयात्रः ।
वनभूमिदिदृक्षया शमेप्सुर्नरदेवानुमतो बहिः प्रतस्थे ॥ २ ॥
नवरुक्मखलीनकिङ्किणीकं प्रचलच्चामरचारुहेमभाण्डम् ।
अभिरुह्य स कन्थकं सदश्वं प्रययौ केतुमिव द्रुमाब्जकेतुः ॥ ३ ॥
स विकृष्टतरां वनान्तभूमिं वनलोभाच्च ययौ महीगुणाच्च ।
सलिलोर्मिविकारसीरमार्गां वसुधां चैव ददर्श कृष्यमाणाम् ॥ ४ ॥
हलभिन्नविकीर्णशष्पदर्भां हतसूक्ष्मक्रिमिकीटजन्तुकीर्णाम् ।
समवेक्ष्य रसां तथाविधां तां स्वजनस्येव वधे भृशं शुशोच ॥ ५ ॥

1. b. paramāhair, A ; dam-paḥi mchod-pa-rnams-kyis, T. c. na jagāma ratin (originally dhṛtin?), A ; brtan-par gśegs ma-gyur, T.

2. a. kṣamai, A. b. °kathai, A. cd. śamepsu nnara°, A ; nags-kyi sa-la ḥgro-ḥdod lta-bar ḥdod-pa-yis (vanabhūmiṁ didṛkṣayā gamepsur?), T. d. bahi, A.

3. ab. °kiṅkinīkaṁ pracalatcāmara°, A. c. stan-bcas (sakambalam?), T. sadaśva, A.

4. a. vikṛṣṇatarām, A ; rnam-par rgyaṅ-riṅ, T ; nikṛṣṭatarāṁ, Co. b. °guṇāccha(?cca?), A ; yon-tan-las, T. c. chu-gñer bzhin-du rnam-par-bkram-paḥi (salilormivikīrṇa°?), T. d. vasudhā, A.

5. c. samavekṣa raśān tathavidhān tā, A.

क्षषतः पुरुषांश्च वीक्ष्यमाणः पवनार्कांशुरजोविभिन्नवर्णान् ।
वहनक्लमविक्लवांश्च धुर्यान् परमार्यः परमां कृपां चकार ॥ ६ ॥
अवतीर्य ततस्तुरङ्गपृष्ठाच्छनकैर्गां व्यचरच्छुचा परीतः ।
जगतो जननव्ययं विचिन्वन् कृपणं खल्विदमित्युवाच चार्तः ॥ ७ ॥
मनसा च विविक्ततामभीप्सुः सुहृदस्ताननुयायिनो निवार्य ।
अभितश्चलचारुपर्णवत्या विजने मूलमुपेयिवान् स जम्ब्वाः ॥ ८ ॥
निषसाद स यत्र शौचवत्यां भुवि वैडूर्यनिकाशशाद्वलायाम् ।
जगतः प्रभवव्ययौ विचिन्वन्मनसश्च स्थितिमार्गमाललम्बे ॥ ९ ॥
समवाप्तमनःस्थितिश्च सद्यो विषयेच्छादिभिराधिभिश्च मुक्तः ।
सवितर्कविचारमाप शान्तं प्रथमं ध्यानमनास्रवप्रकारम् ॥ १० ॥
अधिगम्य ततो विवेकजं तु परमप्रीतिसुखं मनःसमाधिम् ।
इदमेव ततः परं प्रदध्यौ मनसा लोकगतिं निशाम्य सम्यक् ॥११॥
कृपणं बत यज्जनः स्वयं सन्नवशो व्याधिजराविनाशधर्मा ।
जरयार्दितमातुरं मृतं वा परमज्ञो विजुगुप्सते मदान्धः ॥ १२ ॥

6. a. vīkṣyamāṇaḥ, A. b. rluṅ-gis gtor-baḥi rdul-gyis (pavanākṣiptarajo°), T.

7. b. vyacarat kṣudhā, A; rnam-par-rgyu-zhiṅ mya-ṅan daṅ ldan-pa, T. c. e.c. Cowell; vicintan, A; rnam-sems-śiṅ (vicintayan?), T.

8. b. phyir-bzlogs-nas (nivartya), T. c. abhitacala°, A; kun-nas mṅon-par gyo-zhiṅ, T. d. vijana, A. jamvāḥ, A.

9. a. niṣasāda ca yatra khocavatyāṁ, A; gtsaṅ-mar ldan-paḥi sa-gzhi der de ni zhugs-te (niṣasāda sa tatra śaucavatyāṁ bhuvi), T.

10. b. viṣacchādibhir (one syllable short), A; yul-la ḥdod sogs, T. d. zag-pa med-paḥi rab-bskyod-pa (anāsravaprakampam?), T.

11. c. e.c. Cowell; imam eva, A. d. rab-brtags-nas (parīkṣya?), T.

12. b. avaso vyādhijarāvināsadharmmaḥ, A; dbaṅ ni yod-min ... rnam-par-ñams-paḥi chos, T.

इह चेदहमीदृशः स्वयं सन्विजुगुप्सेय परं तथास्वभावम् ।
न भवेत्सदृशं हि तत्क्षमं वा परमं धर्ममिमं विजानतो मे ॥ १३ ॥

इति तस्य विपश्यतो यथावज्जगतो व्याधिजराविपत्तिदोषान् ।
बलयौवनजीवितप्रवृत्तो विजगामात्मगतो मदः क्षणेन ॥ १४ ॥

न जहर्ष न चापि चानुतेपे विचिकित्सां न ययौ न तन्द्रिनिद्रे ।
न च कामगुणेषु संररञ्जे न विदिद्वेष परं न चावमेने ॥ १५ ॥

इति बुद्धिरियं च नीरजस्का ववृधे तस्य महात्मनो विशुद्धा ।
पुरुषैरपरैरदृश्यमानः पुरुषश्चोपससर्प भिक्षुवेषः ॥ १६ ॥

नरदेवसुतस्तमभ्यपृच्छद्वद कोऽसीति शशंस सोऽथ तस्मै ।
नरपुंगव जन्ममृत्युभीतः श्रमणः प्रव्रजितोऽस्मि मोक्षहेतोः ॥ १७ ॥

जगति क्षयधर्मके मुमुक्षुर्मृगयेऽहं शिवमक्षयं पदं तत् ।
स्वजनेऽन्यजने च तुल्यबुद्धिर्विषयेभ्यो विनिवृत्तरागदोषः ॥ १८ ॥

निवसन्क्वचिदेव वृक्षमूले विजने वायतने गिरौ वने वा ।
विचराम्यपरिग्रहो निराशः परमार्थाय यथोपपन्नभैक्षः ॥ १९ ॥

इति पश्यत एव राजसूनोरिदमुक्त्वा स नभः समुत्पपात ।
स हि तद्वपुरन्यबुद्धदर्शी स्मृतये तस्य समेयिवान्दिवौकाः ॥ २० ॥

14. c. balayovanajīvitapravṛttau, A ; rab-zhugs-paḥi . . . rgyags-pa, T.

15. d. na vividveṣa, A ; rnam-par-sdaṅ-bar ma-gyur, T.

16. d. bhikṣuveśaḥ, A.

17. b. ko sī(written over ṣī)ti saśaṁsa, A. c. e.c. Cowell : navapuṅgava, A : mi-yi skyes-mchog (narapuṅgava?), T.

18. c. sujano (corrected to ajano) nyajane ca, A ; 'with mind that is equal towards relation and foe', C and FP ; T omits the *pāda*.

19. a. nivasat, A. d. yathepapannabhekṣaḥ (?bhikṣuḥ?), A : ji-ltar ñer-ldan sloṅ-mo-ba, T ; °bhikṣaḥ, Kern.

20. c. anyabuddhidarśśī, A ; saṅs-rgyas gzhan gzigs-śiṅ, T : 'the former Buddhas', C.

गगनं खगवद्गते च तस्मिन्नृवरः संजहृषे विसिस्मिये च ।
उपलभ्य ततश्च धर्मसंज्ञामभिनिर्याणविधौ मतिं चकार ॥ २१ ॥

तत इन्द्रसमो जितेन्द्रियाश्वः प्रविविक्षुः पुरमश्वमारुरोह ।
परिवारजनं त्ववेक्षमाणस्तत एवाभिमतं वनं न भेजे ॥ २२ ॥

स जरामरणक्षयं चिकीर्षुर्वनवासाय मतिं स्मृतौ निधाय ।
प्रविवेश पुनः पुरं न कामाद्वनभूमेरिव मण्डलं द्विपेन्द्रः ॥ २३ ॥

सुखिता बत निर्वृता च सा स्त्री पतिरीदृक्ष इहायताक्ष यस्याः ।
इति तं समुदीक्ष्य राजकन्या प्रविशन्तं पथि साञ्जलिर्जगाद ॥२४॥

अथ घोषमिमं महाभ्रघोषः परिशुश्राव शमं परं च लेभे ।
श्रुतवान्स हि निर्वृतेति शब्दं परिनिर्वाणविधौ मतिं चकार ॥२५॥

अथ काञ्चनशैलशृङ्गवर्ष्मा गजमेघर्षभबाहुनिस्वनाक्षः ।
क्षयमक्षयधर्मजातरागः शशिसिंहाननविक्रमः प्रपेदे ॥ २६ ॥

मृगराजगतिस्ततोऽभ्यगच्छन्नृपतिं मन्त्रिगणैरुपास्यमानम् ।
समितौ मरुतामिव ज्वलन्तं मघवन्तं त्रिदिवे सनत्कुमारः ॥ २७ ॥

21. c. dharmmasaṁjñam, A ; chos-kyi ḥdu-śes, T ; 'the idea of the good law', C. d. abhinıryāna°, A.

22. b. param aśvam, A ; groṅ-la . . . rta-la, T. c. parivartya janaṁ tv avekṣamanas, A ; ḥkhor-gyi skye-bo-dag kyaṅ mṅon-par ḥdod-pa-ste, T.

24. a. nivṛtā, A. b. īdṛk tvām ihāyatākṣa, A ; spyan-yaṅs . . . ḥdi-ḥdra ḥdir, T. c. samudīkṣa, A. śākyaḥi bu-mo zhig (śākyakanyā), T. d. rajñalir jjagāda, A ; thal-mo sbyar-ba daṅ bcas smras-so, T.

25. c. śrutavāṁś ca, A ; thos-pa daṅ ldan des, T. d. °vidho, A ; cho-gar, T.

26. d. śaśisihānanavikrama, A.

27. a. °gati tato, A. b. °ganair upāsyamāṇaṁ, A. c. śamitau, A ; ḥdun-sa-ru, T.

प्रणिपत्य च साञ्जलिर्बभाषे दिश मह्यं नरदेव साध्वनुज्ञाम् ।
परिविव्रजिषामि मोक्षहेतोर्नियतो ह्यस्य जनस्य विप्रयोगः ॥ २८ ॥
इति तस्य वचो निशम्य राजा करिणेवाभिहतो द्रुमश्चचाल ।
कमलप्रतिमेऽञ्जलौ गृहीत्वा वचनं चेदमुवाच बाष्पकण्ठः ॥ २९ ॥
प्रतिसंहर तात बुद्धिमेतां न हि कालस्तव धर्मसंश्रयस्य ।
वयसि प्रथमे मतौ चलायां बहुदोषां हि वदन्ति धर्मचर्याम् ॥३०॥
विषयेषु कुतूहलेन्द्रियस्य व्रतखेदेष्वसमर्थनिश्चयस्य ।
तरुणस्य मनश्चलत्यरण्यादनभिज्ञस्य विशेषतो विवेके ॥ ३१ ॥
मम तु प्रियधर्म धर्मकालस्त्वयि लक्ष्मीमवसृज्य लक्ष्मभूते ।
स्थिरविक्रम विक्रमेण धर्मस्तव हित्वा तु गुरुं भवेदधर्मः ॥ ३२ ॥
तदिमं व्यवसायमुत्सृज त्वं भव तावन्निरतो गृहस्थधर्मे ।
पुरुषस्य वयःसुखानि भुक्त्वा रमणीयो हि तपोवनप्रवेशः ॥ ३३ ॥
इति वाक्यमिदं निशम्य राज्ञः कलविङ्कस्वर उत्तरं बभाषे ।
यदि मे प्रतिभूश्चतुर्षु राजन् भवसि त्वं न तपोवनं श्रयिष्ये ॥ ३४ ॥
न भवेन्मरणाय जीवितं मे विहरेत्स्वास्थ्यमिदं च मे न रोगः ।
न च यौवनमाक्षिपेज्जरा मे न च संपत्तिमिमां हरेद्विपत्तिः ॥३५॥

28. c. yoṅs-su rnam-par gśegs-par bgyi (parivivrajisyāmi?), T.

29. a. nisamya, A.

30. a. pratisahara, A. d. chos-kyi spyod-pa gsuṅs-pa-rnams ni skyon maṅ-ṅo (=bahudoṣā vadanto dharmacaryā), T.

31. b. brtul-zhugs gyo-ba-rnams (equivalent uncertain), T. c. calaty araraṇyād, A.

32. b. e.c. ; lakṣabhūte (marginal gloss, sthānabhūte), A ; mtshon-gyur, T ; lakṣya°, Co.

33. b. tāvat nirāto, A.

34. a. rnam-par gsan-nas (viśrutya, viśamya?), T.

35. d. haret vipattiḥ, A.

इति दुर्लभमर्थमूचिवांसं तनयं वाक्यमुवाच शाक्यराजः ।
त्यज बुद्धिमिमामतिप्रवृत्तामवहास्योऽतिमनोरथोऽक्रमश्च ॥ ३६ ॥

अथ मेरुगरुर्गुरुं बभाषे यदि नास्ति क्रम एष नास्मि वार्यः ।
शरणाज्ज्वलनेन दह्यमानान्न हि निश्चिक्रमिषुः क्षमं ग्रहीतुम् ॥३७॥

जगतश्च यदा ध्रुवो वियोगो ननु धर्माय वरं स्वयंवियोगः ।
अवशं ननु विप्रयोजयेन्मामकृतस्वार्थमतृप्तमेव मृत्युः ॥ ३८ ॥

इति भूमिपतिर्निशम्य तस्य
व्यवसायं तनयस्य निर्मुमुक्षोः ।
अभिधाय न यास्यतीति भूयो
विदधे रक्षणमुत्तमांश्च कामान् ॥ ३९ ॥

सचिवैस्तु निदर्शितो यथावद्
बहुमानात्प्रणयाच्च शास्त्रपूर्वम् ।
गुरुणा च निवारितोऽश्रुपातैः
प्रविवेशावसथं ततः स शोचन् ॥ ४० ॥

36. c. imāṅ gatipravṛttām (written over something else not legible), A ; śin-tu rab-tu-zhugs-paḥi blo ḥdi, T. d. e.c. Lüders ; °manorathaḥ(?tha?) kramaś ca, A ; yid-la re-ba . . . śa-thaṅ-ḥchad (°manorathaḥ śramaś ca), T ; °manorathakramaś ca, Co.

37. a. ga(?gu?)rūṁ, A. d. niścikramiṣuṁ, A ; phyi-rol ḥbyuṅ-bar ḥdod-pa . . . ma-yin (na bahiś cikramiṣuḥ ?), T.

38. For C and FP see note in translation. a. yathā, A ; gaṅ-gi tshe-na, T. b. e.c. Kielhorn ; na tu, A ; chos-phyir ma-yin ḥdi ni rnam-par-ḥbral-bar mchog (=dharmāya na varam ayaṁ viyogaḥ), T. c. na tu, Kielhorn.

39. a. niśāmya, A ; ṅes-par-thos-nas, T.

40. b. zhi-ba sṅon-ḥgro (śāntipūrvam), T ; 'instructed him fully in all the laws of propriety', C.

चलकुण्डलचुम्बिताननाभिर्घननिश्वासविकम्पितस्तनीभिः ।
वनिताभिरधीरलोचनाभिर्मृगशावाभिरिवाभ्युदीक्ष्यमाणः ॥ ४१ ॥

स हि काञ्चनपर्वतावदातो हृदयोन्मादकरो वराङ्गनानाम् ।
श्रवणाङ्गविलोचनात्मभावान्वचनस्पर्शवपुर्गुणैर्जहार ॥ ४२ ॥

विगते दिवसे ततो विमानं वपुषा सूर्य इव प्रदीप्यमानः ।
तिमिरं विजिघांसुरात्मभासा रविरुद्यन्निव मेरुमारुरोह ॥ ४३ ॥

कनकोज्ज्वलदीप्तदीपवृक्षं वरकालागुरुधूपपूर्णगर्भम् ।
अधिरुह्य स वज्रभक्तिचित्रं प्रवरं काञ्चनमासनं सिषेवे ॥ ४४ ॥

तत उत्तममुत्तमाङ्गनास्तं निशि तूर्यैरुपतस्थुरिन्द्रकल्पम् ।
हिमवच्छिरसीव चन्द्रगौरे द्रविणेन्द्रात्मजमप्सरोगणौघाः ॥ ४५ ॥

परमैरपि दिव्यतूर्यकल्पैः स तु तैर्नैव रतिं ययौ न हर्षम् ।
परमार्थसुखाय तस्य साधोरभिनिश्चिक्रमिषा यतो न रेमे ॥ ४६ ॥

अथ तत्र सुरैस्तपोवरिष्ठैरकनिष्ठैर्व्यवसायमस्य बुद्ध्वा ।
युगपत्प्रमदाजनस्य निद्रा विहितासीद्विकृताश्च गात्रचेष्टाः ॥ ४७ ॥

अभवच्छयिता हि तत्र काचिद्विनिवेश्य प्रचले करे कपोलम् ।
दयितामपि रुक्मपत्त्रचित्रां कुपितेवाङ्कगतां विहाय वीणाम् ॥ ४८ ॥

41. d. udīkṣamāṇaḥ, A.

42. b. hṛdayotmāda°, A. c. śravanāṅga°, A. cd. °bhāvām(?s?) vacana°, A.

43. a. divaśe, A. b. bzhin-du mṅon-par-gsal-ba (ivābhidīpyamānaḥ), T.

44. c. mṅon-par-ḥdzegs-nas (abhiruhya), T.

45. c. himavadśirasīva, A. d. °gaṇoghāḥ, A.

48. b. prabale, A; gyo-ba, T. c. gser-gyi snod ni sna-tshogs-paḥi (rukmapātracitrāṁ), T.

विबभौ करलग्नवेणुरन्या स्तनविस्रस्तसितांशुका शयाना ।
ऋजुषट्पदपङ्क्तिजुष्टपद्मा जलफेनप्रहसत्तटा नदीव ॥ ४९ ॥
नवपुष्करगर्भकोमलाभ्यां तपनीयोज्ज्वलसंगताङ्गदाभ्याम् ।
स्वपिति स्म तथापरा भुजाभ्यां परिरभ्य प्रियवन्मृदङ्गमेव ॥ ५० ॥
नवहाटकभूषणास्तथान्या वसनं पीतमनुत्तमं वसानाः ।
अवशा घननिद्रया निपेतुर्गजभग्ना इव कर्णिकारशाखाः ॥ ५१ ॥
अवलम्ब्य गवाक्षपार्श्वमन्या शयिता चापविभुग्नगात्रयष्टिः ।
विरराज विलम्बिचारुहारा रचिता तोरणशालभञ्जिकेव ॥ ५२ ॥
मणिकुण्डलदष्टपत्त्रलेखं मुखपद्मं विनतं तथापरस्याः ।
शतपत्त्रमिवार्धवक्रनाडं स्थितकारण्डवघट्टितं चकाशे ॥ ५३ ॥
अपराः शयिता यथोपविष्टाः स्तनभारैरवनम्यमानगात्राः ।
उपगुह्य परस्परं विरेजुर्भुजपाशैस्तपनीयपारिहार्यैः ॥ ५४ ॥
महतीं परिवादिनीं च काचिद्वनितालिङ्ग्य सखीमिव प्रसुप्ता ।
विजुघूर्ण चलत्सुवर्णसूत्रा वदनेनाकुलयोक्त्रकेण ॥ ५५ ॥

49. b. °viśrastaśitāṁśukā, A. c. sgra-sgrog padma (°ghuṣṭapadmā), T.

50. c. tathā purā, A ; de-bzhin gzhan-rnams (tathāparāḥ), T.

51. c. e.c. ; avaśā vata nidrayā, A ; dbaṅ-med-par ni sdug-ma (for stugs-ma or stugs-po) gñid-kyis (avaśā ghanā nidrayā, or ghananidrayā), T.

52. b. de-bzhin . . . ñal-bar gyur-paḥi lus-kyi mchod-sdoṅ rnam-ḥkhyog-pa (śayitaivaṁ pravibhugnagātrayaṣṭiḥ?), T ; 'with forms like a bow whose tips are bent together (or, suspended by the tips ?)', C. d. toranasāla°, A ; rta-babs-la śālabhanjika, T (which omits racitā).

53. a. daṣṭa*(?pe, ?ve, ?ne)tralekhaṁ, A ; ḥgram-paḥi logs-la . . . . rmugs-pa (°daṣṭagaṇḍalekhaṁ), T. b. rnam-rgyas-śiṅ (vitataṁ), T. d. gyos-par gyur (cakampe), T.

54. a. ji-ltar rnam-par-zhugs bzhin (for śiṅ?) (yathā vivṛttāḥ?), T. c. paraspara, A.

55. b. vanitāligya, A. d. °yoktrakena, A.

पणवं युवतिर्भुजांसदेशादवविस्रंसितचारुपाशमन्या ।
सविलासरतान्ततान्तमूर्वोर्विवरे कान्तमिवाभिनीय शिश्ये ॥ ५६ ॥

अपरा बभुर्निमीलिताक्ष्यो विपुलाक्ष्योऽपि शुभभ्रुवोऽपि सत्यः ।
प्रतिसंकुचितारविन्दकोशाः सवितर्यस्तमिते यथा नलिन्यः ॥ ५७ ॥

शिथिलाकुलमूर्धजा तथान्या जघनस्रस्तविभूषणांशुकान्ता ।
अशयिष्ट विकीर्णकण्ठसूत्रा गजभग्ना प्रतियातनाङ्गनेव ॥ ५८ ॥

अपरास्त्ववशा ह्रिया वियुक्ता
धृतिमत्योऽपि वपुर्गुणैरुपेताः ।
विनिशश्वसुरुल्बणं शयाना
विकृताः क्षिप्तभुजा जजृम्भिरे च ॥ ५९ ॥

व्यपविद्धविभूषणस्रजोऽन्या
विसृताग्रन्थनवाससो विसंज्ञाः ।
अनिमीलितशुक्लनिश्चलाक्ष्यो
न विरेजुः शयिता गतासुकल्पाः ॥ ६० ॥

विवृतास्यपुटा विवृद्धगात्री प्रपतद्वक्त्रजला प्रकाशगुह्या ।
अपरा मदघूर्णितेव शिश्ये न बभासे विकृतं वपुः पुपोष ॥ ६१ ॥

56. ab. bhujāṁśadeśād avaviśraṁsita°, A. b. mdzes-paḥi logs-can (°cārupārśvam), T.

58. b. °bhūsaṇāśukā°, A; rgyan daṅ dar-rnams dpyi-la rnam-ñil de-rnams (jaghanavisrastabhūsanāṁśukās tāḥ), T. d. patiyātāṅganeva (one syllable short), A; yan-lag-ma-yi gzugs-brñan . . . bzhin, T.

60. a. °śrajo nyā, A.

61. a. lus-po rab-brgyan-zhiṅ (=pratatagātrā), T; vivṛttagātrā, Gawroński. c. ḥkhrul-bar gyur-pa ñid (°ghūrṇitaiva), T. d. na babhāṣe, A; mdzes-ma-gyur, T.

इति सत्त्वकुलान्वयानुरूपं विविधं स प्रमदाजनः शयानः ।
सरसः सदृशं बभार रूपं पवनावर्जितरुग्णपुष्करस्य ॥ ६२ ॥

समवेक्ष्य तथा तथा शयाना विकृतास्ता युवतीरधीरचेष्टाः ।
गुणवद्वपुषोऽपि वल्गुभाषा नृपसूनुः स विगर्हयांबभूव ॥ ६३ ॥

अशुचिर्विकृतश्च जीवलोके वनितानामयमीदृशः स्वभावः ।
वसनाभरणैस्तु वञ्च्यमानः पुरुषः स्त्रीविषयेषु रागमेति ॥ ६४ ॥

विमृशेद्यदि योषितां मनुष्यः प्रकृतिं स्वप्नविकारमीदृशं च ।
ध्रुवमत्र न वर्धयेत्प्रमादं गुणसंकल्पहतस्तु रागमेति ॥ ६५ ॥

इति तस्य तदन्तरं विदित्वा निशि निश्चिक्रमिषा समुद्बभूव ।
अवगम्य मनस्ततोऽस्य देवैर्भवनद्वारमपावृतं बभूव ॥ ६६ ॥

अथ सोऽवततार हर्म्यपृष्ठाद्युवतीस्ताः शयिता विगर्हमाणः ।
अवतीर्य ततश्च निर्विशङ्को गृहकक्ष्यां प्रथमां विनिर्जगाम ॥ ६७ ॥

तुरगावचरं स बोधयित्वा जविनं छन्दकमित्थमित्युवाच ।
हयमानय कन्थकं त्वरावानमृतं प्राप्तुमितोऽद्य मे यियासा ॥ ६८ ॥

62. a. e.c.; satvakulānvarūpam (two syllables short), A; sems-pa daṅ ni rigs-kyi rjes-ḥgroḥi gzugs (sattvakulānvayarūpaṁ, one syllable short), T. c. mdzes-par gyur (babhāsa?), T. d. °puskarasya. A; gser-gyi padma-yi (°rukmapuṣkarasya), T.

63. a. samavekṣya ta ta śayānā (two syllables short), A; de-ltar ... de-ltar ñal-baḥi ... mthoṅ-nas, T.

64. a. hjig-rten-te (jīvaloko?), T.

65. Not in C. a. vimṛṣed, A; rnam-dpyad-na, T. d. 'certainly he obtains the holy (*kung-te*=puṇya, guṇa) body of liberation', FP.

67. d. prathamaṁ, A; khaṅ-paḥi rim-pa daṅ-por, T.

68. b. abhyuvāca, Gawroński. d. bdag skom (so Peking edition) mo (me pipāsā), T.

हृदि या मम तुष्टिरद्य जाता
व्यवसायश्च यथा मतौ निविष्टः ।
विजनेऽपि च नाथवानिवास्मि
ध्रुवमर्थोऽभिमुखः समेत इष्टः ॥ ६९ ॥

ह्रियमेव च संनतिं च हित्वा
शयिता मत्प्रमुखे यथा युवत्यः ।
विवृते च यथा स्वयं कपाटे
नियतं यातुमतो ममाद्य कालः ॥ ७० ॥

प्रातस्ततश्च स भर्तुराज्ञां विदितार्थोऽपि नरेन्द्रशासनस्य ।
मनसीव परेण चोद्यमानस्तुरगस्यानयने मतिं चकार ॥ ७१ ॥

अथ हेमखलीनपूर्णवक्त्रं लघुशय्यास्तरणोपगूढपृष्ठम् ।
बलसत्त्वजवान्वयोपपन्नं स वराश्वं तमुपानिनाय भर्त्रे ॥ ७२ ॥

प्रततत्रिकपुच्छमूलपार्ष्णिं निभृतह्रस्वतनूजपुच्छकर्णम् ।
विनतोन्नतपृष्ठकुक्षिपार्श्वं विपुलप्रोथललाटकट्युरस्कम् ॥ ७३ ॥

69. a. T omits yā (i.e. reading hṛdaye?). b. dhṛtau, A ; blo-gros-la, T c. T omits iva ; yathāsmi, Gawroński. d. sa me ya iṣṭaḥ, A ; ḥdod-paḥi don ni mṅon-du phyogs ḥdu, T.

70. d. yātum anāmayāya kālaḥ, A ; bdag ni ḥdi-nas de-riṅ ḥgro-baḥi dus, T.

71. c. codyamāṇas, A.

72. cd. °javānvalopapanna sa varāṁśvan, A ; mgyogs daṅ rjes-ḥgro ñer-ldan-pa, T. d. der ni ñe-bar-hoṅs (upāninãya tatra), T.

73. For C see note in translation. a. sṅa-maḥi (for rṅa-maḥi?) rtsa-ba rtsib-log gsum-ga (°trikapucchamūlapārśvaṁ, or °trikapūrvamūlapārśvaṁ), T. b. e.c. ; nibhṛtaṁ hrasvatanūjapṛṣṭhakarṇṇaṁ, A ; rgyab daṅ rna-ba lus-skyes spu ni thuṅ-zhiṅ dul (=A), T ; nibhṛtahrasva°, Gawroński. c. rgyab-kyi rtsib-ma-dag ni dud-ciṅ rnam-rgyas-la (vitatonnatapṛsthapārśvaṁ, or °pṛṣṭhakukṣipārśvaṁ?), T.

उपगुह्य स तं विशालवक्षाः कमलाभेन च सान्त्वयन् करेण ।
मधुराक्षरया गिरा शशास ध्वजिनीमध्यमिव प्रवेष्टुकामः ॥ ७४ ॥
बहुशः किल शत्रवो निरस्ताः समरे त्वामधिरुह्य पार्थिवेन ।
अहमप्यमृतं पदं यथावत्तुरगश्रेष्ठ लभेय तत्कुरुष्व ॥ ७५ ॥
सुलभाः खलु संयुगे सहाया विषयावाप्तसुखे धनार्जने वा ।
पुरुषस्य तु दुर्लभाः सहायाः पतितस्यापदि धर्मसंश्रये वा ॥ ७६ ॥

इह चैव भवन्ति ये सहायाः
कलुषे कर्मणि धर्मसंश्रये वा ।
अवगच्छति मे यथान्तरात्मा
नियतं तेऽपि जनास्तदंशभाजः ॥ ७७ ॥

तदिदं परिगम्य धर्मयुक्तं मम निर्याणमितो जगद्धिताय ।
तुरगोत्तम वेगविक्रमाभ्यां प्रयतस्वात्महिते जगद्धिते च ॥ ७८ ॥
इति सुहृदमिवानुशिष्य कृत्ये तुरगवरं नृवरो वनं यियासुः ।
सितमसितगतिद्युतिर्वपुष्मान् रविरिव शारदमभ्रमारुरोह ॥ ७९ ॥
अथ स परिहरन्निशीथचण्डं परिजनबोधकरं ध्वनिं सदश्वः ।
विगतहनुरवः प्रशान्तहेषश्चकितविमुक्तपदक्रमो जगाम ॥ ८० ॥

74. a. °vaksyāḥ, A. b. śāntvayat, A. d. rgyal-mtshan sde-la dmag-dpon rab-tu-ḥjug-pa bzhin (=dhvajinīṁ mukhya iva praviśamānaḥ), T.

75. a. kila (corrected to kali), A; T omits. nirastā, A. b. mṅon-par-zhon-nas (abhiruhya), T. c. paraṁ, A; go-ḥphaṅ, T. d. de-ltar mdzod (= tathā kuruṣva), T.

79. a. T omits kṛtye.

80. d. °kramo (corrected to °krame), A; ḥgros-kyis (°kramair or °kramo), T.

कनकवलयभूषितप्रकोष्ठैः
कमलनिभैः कमलानिव प्रविध्य ।
अवनततनवस्ततोऽस्य यक्षा-
श्चकितगतैर्दधिरे खुरान् कराग्रैः ॥ ८१ ॥

गुरुपरिघकपाटसंवृता या
न सुखमपि द्विरदैरपाव्रियन्ते ।
व्रजति नृपसुते गतस्वनास्ताः
स्वयमभवन्विवृताः पुरः प्रतोल्यः ॥ ८२ ॥

पितरमभिमुखं सुतं च बालं
जनमनुरक्तमनुत्तमां च लक्ष्मीम् ।
कृतमतिरपहाय निर्व्यपेक्षः
पितृनगरात्स ततो विनिर्जगाम ॥ ८३ ॥

अथ स विमलपङ्कजायताक्षः पुरमवलोक्य ननाद सिंहनादम् ।
जननमरणयोरदृष्टपारो न पुरमहं कपिलाह्वयं प्रवेष्टा ॥ ८४ ॥

इति वचनमिदं निशम्य तस्य द्रविणपतेः परिषद्गणा ननन्दुः ।
प्रमुदितमनसश्च देवसङ्घा व्यवसितपारणमाशशंसिरेऽस्मै ॥ ८५ ॥

81. b. pravidhyaḥ, A; kamala-rnams rnam-byas-nas (=kamalān vikṛtya), T. d. cakitagater, A.; tshim gyur lag-paḥi rtse-mos (cakitagatair . . . karāgraiḥ, or °gatāḥ), T.

82. a. °kavāṭa°, A. b. dviradhair ayādhri(?vri?)yante, A. c. gataśvanās, A. d. abhavad, A.

84. a. vikajapaṅkajā°, A; rnam-rgyas (vikata°?), T; 'with eyes like the pure lotus flower that springs from the mud', C; vikaca°, Co. d. na punar ahaṁ, A; groṅ-khyer, T.

85. a. niśāmya, A; thos-nas, T.

हुतवहवपुषो दिवौकसोऽन्ये व्यवसितमस्य सुदुष्करं विदित्वा ।
अकृषत तुहिने पथि प्रकाशं घनविवरप्रसृता इवेन्दुपादाः ॥ ८६ ॥

हरितुरगतुरङ्गवत्तुरङ्गः
स तु विचरन्मनसीव चोद्यमानः ।
अरुणपरुषतारमन्तरिक्षं
स च सुबहूनि जगाम योजनानि ॥ ८७ ॥

इति बुद्धचरिते महाकाव्येऽभिनिष्क्रमणो नाम पञ्चमः सर्गः ॥ ५

86. a. divaukasau, A. b. asya ca duskaram, A[c]; ḥdi-yi . . . śin-tu dkaḥ-ba, T. c. e.c. Joglekar ; akuruta, A ; byas, T ; adadhata, Böhtlingk, Kern ; vyadadhata, Sovani.

87. b. manaśīva, A ; yid-kyis sprul-ba (amend to skul-ba?) bzhin-du rnam-par-rgyu bzhin-du (vicaran manaseva . . . ?), T.

## CANTO VI

ततो मुहूर्ताभ्युदिते जगच्चक्षुषि भास्करे ।
भार्गवस्याश्रमपदं स ददर्श नृणां वरः ॥ १ ॥

सुप्तविश्वस्तहरिणं स्वस्थस्थितविहङ्गमम् ।
विश्रान्त इव यद्दृष्ट्वा कृतार्थ इव चाभवत् ॥ २ ॥

स विस्मयनिवृत्त्यर्थं तपःपूजार्थमेव च ।
स्वां चानुवर्तितां रक्षन्नश्वपृष्ठादवातरत् ॥ ३ ॥

अवतीर्य च पस्पर्श निस्तीर्णमिति वाजिनम् ।
छन्दकं चाब्रवीत्प्रीतः स्नापयन्निव चक्षुषा ॥ ४ ॥

इमं तार्क्ष्योपमजवं तुरङ्गमनुगच्छता ।
दर्शिता सौम्य मद्भक्तिर्विक्रमश्चायमात्मनः ॥ ५ ॥

सर्वथास्म्यन्यकार्योऽपि गृहीतो भवता हृदि ।
भर्तृस्नेहश्च यस्यायमीदृशः शक्तिरेव च ॥ ६ ॥

अस्निग्धोऽपि समर्थोऽस्ति निःसामर्थ्योऽपि भक्तिमान् ।
भक्तिमांश्चैव शक्तश्च दुर्लभस्त्वद्विधो भुवि ॥ ७ ॥

2. c. yat dṛṣṭvā, A.

**6.** a. thams-cad-nas . . . yin (sarvato 'smy?), T. c. bhatr°, A. d. e.c.; īdṛśas sakta eva ca, A; de-ḥdra-dag-la ñid (īdṛśeṣv eva?), T; 'a devoted heart, a capable and diligent body, these two I now begin to see', C; īdṛśī śaktir eva ca, Gawroński.

7. b. niḥsāmartho pi, A. c. bhaktimāś caiva, A.

तत्प्रीतोऽस्मि तवानेन महाभागेन कर्मणा ।
यस्य ते मयि भावोऽयं फलेभ्योऽपि पराङ्मुखः ॥ ८ ॥
को जनस्य फलस्थस्य न स्यादभिमुखो जनः ।
जनीभवति भूयिष्ठं स्वजनोऽपि विपर्यये ॥ ९ ॥
कुलार्थं धार्यते पुत्रः पोषार्थं सेव्यते पिता ।
आशयाच्छ्लिष्यति जगन्नास्ति निष्कारणा स्वता ॥ १० ॥
किमुक्त्वा बहु संक्षेपात्कृतं मे सुमहत्प्रियम् ।
निवर्तस्वाश्वमादाय संप्राप्तोऽस्मीप्सितं पदम् ॥ ११ ॥
इत्युक्त्वा स महाबाहुरनुशंसचिकीर्षया ।
भूषणान्यवमुच्यास्मै संतप्तमनसे ददौ ॥ १२ ॥
मुकुटाद्दीपकर्माणं मणिमादाय भास्वरम् ।
ब्रुवन्वाक्यमिदं तस्थौ सादित्य इव मन्दरः ॥ १३ ॥
अनेन मणिना छन्द प्रणम्य बहुशो नृपः ।
विज्ञाप्योऽमुक्तविश्रम्भं संतापविनिवृत्तये ॥ १४ ॥
जन्ममरणनाशार्थं प्रविष्टोऽस्मि तपोवनम् ।
न खलु स्वर्गतर्षेण नास्नेहेन न मन्युना ॥ १५ ॥

9. cd. dṛśyate mayi bhāvo yas phalebhyo pi parāṇmukhe, A ; gaṅ-zhig khyod-kyi bsam-pa ḥdi ḥbras-bu-las kyaṅ gzhan-du phyogs (=text, omitting mayi), T ; ' rejecting the profit of world glory, you come after me ', and ' you alone follow me, turning your back on profit ', C.

10. d. niṣkāraṇāsvatā, Co.

11. b. svamahat, A ; chen-legs, T. d. īpsitaṁ vanaṁ, A ; ḥdod-paḥi gnas, T ; ' I have now reached the place I sought ', C.

12. b. ānṛśaṁsacikīrṣayā, A ; rjes-su-bsṅags-pa byed-ḥdod-pas, T.

13. d. ñi-ma ḥbigs-byed-la bzhin des (so 'ditya iva mandare!) T.

14. c. °visrambhaṁ, A.

15. a. jarāmaraṇa°, A ; skye daṅ ḥchi-ba, T ; ' birth, old age and death ', C.

तद्देवमभिनिष्क्रान्तं न मां शोचितुमर्हसि ।
भूत्वापि हि चिरं श्लेषः कालेन न भविष्यति ॥ १६ ॥
ध्रुवो यस्माच्च विश्लेषस्तस्मान्मोक्षाय मे मतिः ।
विप्रयोगः कथं न स्याद्भूयोऽपि स्वजनादिति ॥ १७ ॥
शोकत्यागाय निष्क्रान्तं न मां शोचितुमर्हसि ।
शोकहेतुषु कामेषु सक्ताः शोच्यास्तु रागिणः ॥ १८ ॥
अयं च किल पूर्वेषामस्माकं निश्चयः स्थिरः ।
इति दायाद्यभूतेन न शोच्योऽस्मि पथा व्रजन् ॥ १९ ॥
भवन्ति ह्यर्थदायादाः पुरुषस्य विपर्यये ।
पृथिव्यां धर्मदायादाः दुर्लभास्तु न सन्ति वा ॥ २० ॥
यदपि स्यादसमये यातो वनमसाविति ।
अकालो नास्ति धर्मस्य जीविते चञ्चले सति ॥ २१ ॥
तस्मादद्यैव मे श्रेयश्चेतव्यमिति निश्चयः ।
जीविते को हि विश्रम्भो मृत्यौ प्रत्यर्थिनि स्थिते ॥ २२ ॥
एवमादि त्वया सौम्य विज्ञाप्यो वसुधाधिपः ।
प्रयतेथास्तथा चैव यथा मां न स्मरेदपि ॥ २३ ॥

17. c. viprayoga, A. cd. syāt bhūyo, A. d. e.c.; svajanādibhiḥ, A; raṅ-gi skye-bo-las (svajanāt), T.

18. d. socyā'stu, A.

19. b. asmāka, A. ṅes-par gnas (niścayaḥ sthitaḥ), T; 'firmly resolved', C. c dāyāda°, A; ster-byar, T; 'I now have inherited', C. d. yathā, A; lam-gyis, T.

20. c. chos-kyi bdag-po (dharmapatayo?), T.

21. b. vanasamāv iti, A. d. jivite, A.

22. d. ḥchi-baḥi dgra ni (mṛtyupratyarthini?), T.

अपि नैर्गुण्यमस्माकं वाच्यं नरपतौ त्वया ।
नैर्गुण्यात्त्यज्यते स्नेहः स्नेहत्यागान्न शोच्यते ॥ २४ ॥
इति वाक्यमिदं श्रुत्वा छन्दः संतापविक्लवः ।
बाष्पग्रथितया वाचा प्रत्युवाच कृताञ्जलिः ॥ २५ ॥
अनेन तव भावेन बान्धवायासदायिना ।
भर्तः सीदति मे चेतो नदीपङ्क इव द्विपः ॥ २६ ॥
कस्य नोत्पादयेद्बाष्पं निश्चयस्तेऽयमीदृशः ।
अयोमयेऽपि हृदये किं पुनः स्नेहविक्लवे ॥ २७ ॥
विमानशयनार्हं हि सौकुमार्यमिदं क्व च ।
खरदर्भाङ्कुरवती तपोवनमही क्व च ॥ २८ ॥
श्रुत्वा तु व्यवसायं ते यदश्वोऽयं मयाहृतः ।
बलात्कारेण तन्नाथ दैवेनैवास्मि कारितः ॥ २९ ॥
कथं ह्यात्मवशो जानन् व्यवसायमिमं तव ।
उपानयेयं तुरगं शोकं कपिलवास्तुनः ॥ ३० ॥
तन्नार्हसि महाबाहो विहातुं पुत्रलालसम् ।
स्निग्धं वृद्धं च राजानं सद्धर्ममिव नास्तिकः ॥ ३१ ॥
संवर्धनपरिश्रान्तां द्वितीयां तां च मातरम् ।
देवीं नार्हसि विस्मर्तुं कृतघ्न इव सत्क्रियाम् ॥ ३२ ॥

27. c. ayasmaye (corrected on margin to ayomaye), A.
28. a. gzhal-med khaṅ-gi lam ḥos-paḥi (vimānagamanārhaṁ?), T.
29. d. lha-yis . . . ḥdra (daiveneva), T; 'a heavenly spirit, appearing, compelled me', C.
30. a. katha, A. jānaṁ, A. d. sokaṅ, A.
31. b. puttra°, A. c. snigdha(?dhaṁ?), A.
32. b. dvitīyā, A. c. deva, A; ma de daṅ lha-mo, T.

बालपुत्रां गुणवतीं कुलश्लाघ्यां पतिव्रताम् ।
देवीमर्हसि न त्यक्तुं क्लीबः प्राप्तामिव श्रियम् ॥ ३३ ॥
पुत्रं याशोधरं श्लाघ्यं यशोधर्मभृतां वरम् ।
बालमर्हसि न त्यक्तुं व्यसनीवोत्तमं यशः ॥ ३४ ॥
अथ बन्धुं च राज्यं च त्यक्तुमेव कृता मतिः ।
मां नार्हसि विभो त्यक्तुं त्वत्पादौ हि गतिर्मम ॥ ३५ ॥
नास्मि यातुं पुरं शक्तो दह्यमानेन चेतसा ।
त्वामरण्ये परित्यज्य सुमन्त्र इव राघवम् ॥ ३६ ॥
किं हि वक्ष्यति मां राजा त्वदृते नगरं गतम् ।
वक्ष्याम्युचितदर्शित्वात्किं तवान्तःपुराणि वा ॥ ३७ ॥
यदप्यात्थापि नैर्गुण्यं वाच्यं नरपताविति ।
किं तद्वक्ष्याम्यभूतं ते निर्दोषस्य मुनेरिव ॥ ३८ ॥
हृदयेन सलज्जेन जिह्वया सज्जमानया ।
अहं यद्यपि वा ब्रूयां कस्तच्छ्रद्धातुमर्हति ॥ ३९ ॥
यो हि चन्द्रमसस्तैक्ष्ण्यं कथयेच्छ्रद्दधीत वा ।
स दोषांस्तव दोषज्ञ कथयेच्छ्रद्दधीत वा ॥ ४० ॥

33. d. klība, A.

34. b. varaḥ, A; T ambiguous; 'Yaśodharā's son . . . who bears the good law', C. d. yasaḥ, A.

35. c. tyaktu, A. d. khyod zhabs-na (tvatpāde ?), T.

36. c. tvām āraṇye, A. d. sumitra, A; bśes-bzaṅ (=A), T; 'Sumantra', C.

37. c. vakṣyāmy a(?u?)cita°, A.

39. a. salajyena, A. d. kas taṁ śrad°, A.

40. a. taikṣṇaṁ, A.

सानुक्रोशस्य सततं नित्यं करुणवेदिनः ।
स्निग्धत्यागो न सदृशो निवर्तस्व प्रसीद मे ॥ ४१ ॥
इति शोकाभिभूतस्य श्रुत्वा छन्दस्य भाषितम् ।
स्वस्थः परमया धृत्या जगाद वदतां वरः ॥ ४२ ॥
मद्वियोगं प्रति च्छन्द संतापस्त्यज्यतामयम् ।
नानाभावो हि नियतं पृथग्जातिषु देहिषु ॥ ४३ ॥
स्वजनं यद्यपि स्नेहान्न त्यजेयमहं स्वयम् ।
मृत्युरन्योन्यमवशानस्मान् संत्याजयिष्यति ॥ ४४ ॥
महत्या तृष्णया दुःखैर्गर्भेणास्मि यया धृतः ।
तस्या निष्फलयत्नायाः क्वाहं मातुः क्व सा मम ॥ ४५ ॥
वासवृक्षे समागम्य विगच्छन्ति यथाण्डजाः ।
नियतं विप्रयोगान्तस्तथा भूतसमागमः ॥ ४६ ॥
समेत्य च यथा भूयो व्यपयान्ति बलाहकाः ।
संयोगो विप्रयोगश्च तथा मे प्राणिनां मतः ॥ ४७ ॥
यस्माद्याति च लोकोऽयं विप्रलभ्य परंपरम् ।
ममत्वं न क्षमं तस्मात्स्वप्नभूते समागमे ॥ ४८ ॥
सहजेन वियुज्यन्ते पर्णरागेण पादपाः ।
अन्येनान्यस्य विश्लेषः किं पुनर्न भविष्यति ॥ ४९ ॥

43. c. ṅes-pa yin (niyataḥ?), T.

44. a. svajana, A. gaṅ yaṅ (yad api), T. b. tyajeyam mumukṣayā, A; bdag-gis raṅ ni mi-ḥdor-te, T; 'even if to-day I did not leave my relations', C. d. asmāt, A.

45. b. ggarbhenāsmi, A. c. nisphala°, A.

48. b. e.c.; parasparaṁ, A; gaṅ-phyir phyir-na (Weller), gaṅ-gis phyir-na (Peking edition), T (=yasmād . . . paraṁparam?).

तद्देवं सति संतापं मा कार्षीः सौम्य गम्यताम् ।
लम्बते यदि तु स्नेहो गत्वापि पुनराव्रज ॥ ५० ॥
ब्रूयाश्चास्मत्कृतापेक्षं जनं कपिलवास्तुनि ।
त्यज्यतां तद्गतः स्नेहः श्रूयतां चास्य निश्चयः ॥ ५१ ॥
क्षिप्रमेष्यति वा कृत्वा जन्ममृत्युक्षयं किल ।
अकृतार्थो निरारम्भो निधनं यास्यतीति वा ॥ ५२ ॥
इति तस्य वचः श्रुत्वा कन्थकस्तुरगोत्तमः ।
जिह्वया लिलिहे पादौ बाष्पमुष्णं मुमोच च ॥ ५३ ॥
जालिना स्वस्तिकाङ्केन चक्रमध्येन पाणिना ।
आममर्श कुमारस्तं बभाषे च वयस्यवत् ॥ ५४ ॥
मुञ्च कन्थक मा बाष्पं दर्शितेयं सदश्वता ।
मृष्यतां सफलः शीघ्रं श्रमस्तेऽयं भविष्यति ॥ ५५ ॥
मणित्सरुं छन्दकहस्तसंस्थं ततः स धीरो निशितं गृहीत्वा ।
कोशादसिं काञ्चनभक्तिचित्रं बिलादिवाशीविषमुद्बबर्ह ॥ ५६ ।
निष्कास्य तं चोत्पलपत्त्रनीलं चिच्छेद चित्रं मुकुटं सकेशम् ।
विकीर्यमाणांशुकमन्तरीक्षे चिक्षेप चैनं सरसीव हंसम् ॥ ५७ ॥

51. a. brūyāc cāsmāsv anākṣepaṁ, A ; kho-bo-cag-la ltos-byas-paḥi . . . smros, T ; 'to those who think attentively on me, you should proclaim', C. b. °vastuni, A.

52. b. jarāmṛtyu°, A ; rga daṅ ḥchi-ba (=A), T ; 'if I pass over the ocean of birth and death', C. kilaḥ, A.

53. c. lilihe (corrected to lelihe), A.

54. a. jalinā, A.

55. b. darśiteya, A.

56. b. tataḥ kumāro, A ; de-nas . . . brtan-pa des, T. d. āsīrviṣam udbabarhaḥ, A.

57. a. triṣkāsya, A. b. makuṭaṁ, A. c. atarīkṣe, A.

पूजाभिलाषेण च बाहुमान्याद्दिवौकसस्तं जगृहुः प्रविद्धम् ।
यथावदेनं दिवि देवसङ्घा दिव्यैर्विशेषैर्महयां च चक्रुः ॥ ५८ ॥

मुक्ता त्वलंकारकलत्रवत्तां श्रीविप्रवासं शिरसश्च कृत्वा ।
दृष्ट्वांशुकं काञ्चनहंसचिह्नं वन्यं स धीरोऽभिचकाङ्क्ष वासः ॥ ५९ ॥

ततो मृगव्याधवपुर्दिवौका भावं विदित्वास्य विशुद्धभावः ।
काषायवस्त्रोऽभिययौ समीपं तं शाक्यराजप्रभवोऽभ्युवाच ॥ ६० ॥

शिवं च काषायमृषिध्वजस्ते न युज्यते हिंस्रमिदं धनुश्च ।
तत्सौम्य यद्यस्ति न सक्तिरत्र मह्यं प्रयच्छेदमिदं गृहाण ॥ ६१ ॥

व्याधोऽब्रवीत्कामद काममाराद्नेन विश्वास्य मृगान्निहन्मि ।
अर्थस्तु शक्रोपम यद्यनेन हन्त प्रतीच्छानय शुक्लमेतत् ॥ ६२ ॥

परेण हर्षेण ततः स वन्यं जग्राह वासोंऽशुकमुत्ससर्ज ।
व्याधस्तु दिव्यं वपुरेव बिभ्रत्तच्छुक्लमादाय दिवं जगाम ॥ ६३ ॥

ततः कुमारश्च स चाश्वगोपस्तस्मिंस्तथा याति विसिस्मियाते ।
आरण्यके वाससि चैव भूयस्तस्मिन्नकार्ष्टां बहुमानमाशु ॥ ६४ ॥

छन्दं ततः साश्रुमुखं विसृज्य काषायसंभृद्धृतिकीर्तिभृत्सः ।
येनाश्रमस्तेन ययौ महात्मा संध्याभ्रसंवीत इवोडुराजः ॥ ६५ ॥

58. a. pūjābhilāṣena, A. d. viśerṣai mahayāñ, A.
59. c. dṛṣṭvāśukaṁ, A.
61. b. himśram, A. c. śaktir, A ; chags, T. d. gṛhāṇaṁ, A.
62. a. ḥdod-pa sñiṅ-po-las (kāmasārāt), T. b. nihatya, A ; gsod-do, T.
63. a. mchog-tu rab-tu-dgaḥ-ba-yis (parapraharṣeṇa), T.
64. b. tasmin tathā, A. cd. bhūya tasminn, A.
65. a. chanda, A. b. e.c. ; kāṣāyasaṁvid dhṛti°, A ; brtan . . . . ṅur-smrig gyon-zhin (kāṣāya . . . dhṛti°), T ; ‘ he put on the *kāṣāya* robe ’, C. d. ivoḍurājaḥ (corrected in later hand to ivādrirājaḥ), A ; skar-maḥi rgyal-po bzhin, T ; ‘ like the orb of the sun or moon surrounded by a dark-red cloud ’, C.

ततस्तथा भर्तरि राज्यनिःस्पृहे
तपोवनं याति विवर्णवाससि ।
भुजौ समुत्क्षिप्य ततः स वाजिभृ-
द्भृशं विचुक्रोश पपात च क्षितौ ॥ ६६ ॥

विलोक्य भूयश्च रुरोद सस्वरं हयं भुजाभ्यामुपगुह्य कन्थकम् ।
ततो निराशो विलपन्मुहुर्मुहुर्ययौ शरीरेण पुरं न चेतसा ॥ ६७ ॥

क्वचित्प्रदध्यौ विललाप च क्वचित्
क्वचित्प्रचस्खाल पपात च क्वचित् ।
अतो व्रजन् भक्तिवशेन दुःखित-
श्चचार बह्वीरवशः पथि क्रियाः ॥ ६८ ॥

इति बुद्धचरिते महाकाव्ये छन्दकनिवर्तनो नाम षष्ठः सर्गः ॥ ६ ॥

66. a. °nispṛhe, A. b. virṇṇavāsasi (one syllable short), A; mdog ñams snaṅ-ba-na (vivarṇabhāsasi?), T.

67. b. upagṛjya, A; ñer-ḥkhyud-nas, T; 'clasping the white horse's neck', C. c. nirāso, A. d. T omits puraṁ and adds kyaṅ (for punar?); 'he returned along the road', C.

68. c. vrajaṁ, A. d. byas-pa-ḥo (cakāra?), T.

## CANTO VII

ततो विसृज्याश्रुमुखं रुदन्तं छन्दं वनच्छन्दतया निरास्थः ।
सर्वार्थसिद्धो वपुषाभिभूय तमाश्रमं सिद्ध इव प्रपेदे ॥ १ ॥
स राजसूनुर्मृगराजगामी मृगाजिरं तन्मृगवत्प्रविष्टः ।
लक्ष्मीवियुक्तोऽपि शरीरलक्ष्म्या चक्षूंषि सर्वाश्रमिणां जहार ॥ २ ॥
स्थिता हि हस्तस्थयुगास्तथैव कौतूहलाच्चक्रधराः सदाराः ।
तमिन्द्रकल्पं ददृशुर्न जग्मुर्धुर्या इवार्धावनतैः शिरोभिः ॥ ३ ॥
विप्राश्च गत्वा बहिरिध्महेतोः प्राप्ताः समित्पुष्पपवित्रहस्ताः ।
तपःप्रधानाः कृतबुद्धयोऽपि तं द्रष्टुमीयुर्न मठानभीयुः ॥ ४ ॥
हृष्टाश्च केका मुमुचुर्मयूरा दृष्ट्वाम्बुदं नीलमिवोन्नमन्तः ।
शष्पाणि हित्वाभिमुखाश्च तस्थुर्मृगाश्चलाक्षा मृगचारिणश्च ॥ ५ ॥
दृष्ट्वा तमिक्ष्वाकुकुलप्रदीपं ज्वलन्तमुद्यन्तमिवांशुमन्तम् ।
कृतेऽपि दोहे जनितप्रमोदाः प्रसुस्रुवुर्होमदुहश्च गावः ॥ ६ ॥

1. b. chanda vana°, A. nags-su ḥdun-paḥi dkaḥ-thub (vanacchandatapā, or °tapo), T.

3. a. lag-na gñaḥ-śiṅ bcas-par ḥgro-gyur (=gatāḥ sahastayugāḥ), T.

4. a. sbyin-sreg bud-śiṅ (haviridhma°), T. b. me-tog lo-ḥdab thob-paḥi lag-pa gtsaṅ-rnams (=prāptapuṣpaparṇapavitrahastāḥ), T.

5. b. unnamantaṁ, A; rma-bya-rnams . . . gyen-du dud-ciṅ, T; 'the peacocks . . . rose in the air', C. d. mṛgā calākṣā, A; rgya-skyegs . . . daṅ ni ri-dags-rnams (mṛgāś ca lākṣā !), T.

6. d. prasuśruvur, A.

कश्चिद्वसूनामयमष्टमः स्यात्स्यादश्विनोरन्यतरश्च्युतो वा ।
उच्चेरुरुच्चैरिति तत्र वाचस्तद्दर्शनाद्विस्मयजा मुनीनाम् ॥ ७ ॥

लेखर्षभस्येव वपुर्द्वितीयं धामेव लोकस्य चराचरस्य ।
स द्योतयामास वनं हि कृत्स्नं यदृच्छया सूर्य इवावतीर्णः ॥ ८ ॥

ततः स तैराश्रमिभिर्यथावदभ्यर्चितश्चोपनिमन्त्रितश्च ।
प्रत्यर्चयां धर्मभृतो बभूव स्वरेण साम्भोऽम्बुधरोपमेन ॥ ९ ॥

कीर्णं तथा पुण्यकृता जनेन स्वर्गाभिकामेन विमोक्षकामः ।
तमाश्रमं सोऽनुचचार धीरस्तपांसि चित्राणि निरीक्षमाणः ॥ १० ॥

तपोविकारांश्च निरीक्ष्य सौम्यस्तपोवने तत्र तपोधनानाम् ।
तपस्विनं कंचिदनुव्रजन्तं तत्त्वं विजिज्ञासुरिदं बभाषे ॥ ११ ॥

तत्पूर्वमद्याश्रमदर्शनं मे यस्मादिमं धर्मविधिं न जाने ।
तस्माद्भवानर्हति भाषितुं मे यो निश्चयो यत्प्रति वः प्रवृत्तः ॥ १२ ॥

ततो द्विजातिः स तपोविहारः शाक्यर्षभायर्षभविक्रमाय ।
क्रमेण तस्मै कथयांचकार तपोविशेषांस्तपसः फलं च ॥ १३ ॥

7. a. kaś (corrected to kac)cid vaśūnām, A ; yin-nam-ci, T. b. cyuto tra, A ; ḥphos-sam, T. c. uccairur, A.

8. a. leṣarṣabhasyeva, A ; lha-yi khyu-mchog, T. cd. kṛsnaṁ yadṛtsayā, A ; gaṅ ḥdŏd-pa-yis . . . mthaḥ-dag, T.

9. d. e.c. ; sāddhombudharo°, A ; chu-bcas chu-ḥdzin (sāmbho'-mbudharo°, or sāmbvambu°), T.

10. d. ṅes-par-rnam-gzigs-śiṅ (nivīkṣamāṇaḥ?), T.

11. ab. nirīkṣa saumya tapo°, A ; ṅes (des, Weller) gsan-nas (niśamya?),

12. d. ya (corrected in later hand to yaṁ) prati vaḥ pravṛrttiḥ (corrected to °vṛrttaḥ), A ; gaṅ-lă rab-tu-ḥjug-pa-ḥo, T.

13. d. daṅ ni dkaḥ-thub ḥbras-bu daṅ bcas (satapaḥphalaṁ ca, or °phalāṁś ca?), T ; 'and together with the fruits of *tapas* ', C.

अग्राम्यमन्नं सलिले प्ररूढं पर्णानि तोयं फलमूलमेव ।
यथागमं वृत्तिरियं मुनीनां भिन्नास्तु ते ते तपसां विकल्पाः ॥ १४ ॥
उञ्छेन जीवन्ति खगा इवान्ये तृणानि केचिन्मृगवच्चरन्ति ।
केचिद्भुजङ्गैः सह वर्तयन्ति वल्मीकभूता वनमारुतेन ॥ १५ ॥
अश्मप्रयत्नार्जितवृत्तयोऽन्ये केचित्स्वदन्तापहतान्नभक्षाः ।
कृत्वा परार्थं श्रपणं तथान्ये कुर्वन्ति कार्यं यदि शेषमस्ति ॥ १६ ॥

केचिज्जलक्लिन्नजटाकलापा
द्विः पावकं जुह्वति मन्त्रपूर्वम् ।
मीनैः समं केचिदपो विगाह्य
वसन्ति कूर्मोल्लिखितैः शरीरैः ॥ १७ ॥

एवंविधैः कालचितैस्तपोभिः परैर्दिवं यान्त्यपरैर्नृलोकम् ।
दुःखेन मार्गेण सुखं ह्युपैति सुखं हि धर्मस्य वदन्ति मूलम् ॥ १८ ॥
इत्येवमादि द्विपेन्द्रवत्सः श्रुत्वा वचस्तस्य तपोधनस्य ।
अदृष्टतत्त्वोऽपि न संतुतोष शनैरिदं चात्मगतं बभाषे ॥ १९ ॥

14. a. e.c. Böhtlingk ; salilaṁ prarūḍhaṁ, A ; chu-la rab-skyes-paḥi, T ; salilaprarūḍhaṁ, Co. b. prarnṇāni, A.

15. a. uñcena jīvati, A. b. tṛnāni kecit mṛga°, A. d. °bhūtā iva mārutena, A ; gyur-pa-rnams nags-na rluṅ-gis-so, T.

16. a. 'They do not eat what is husked with wood or stone', C. b. raṅ-gi so-yis ñe-bar-blaṅs (svadantopahṛta°), T. c. śrapaṇa, A.

17. d. kūrmmolikhitaiḥ, A ; rus-sbal bzhin-du lus-rnams rab-tu-bskum-(skums, Weller)-pa-ḥo (hrasanti kūrmapratimaiḥ śarīraiḥ?), T.

18. a. evamvidhai, A. c. sukham upeti (corrected to sukhaṁ kṣu(?a?)-peti, A ; bde-ba ñe-bar-thob phyir, T. d. dukhaṁ, A ; bde-ba, T.

19. d. sanair, A.

दुःखात्मकं नैकविधं तपश्च
स्वर्गप्रधानं तपसः फलं च ।
लोकाश्च सर्वे परिणामवन्तः
स्वल्पे श्रमः खल्वयमाश्रमाणाम् ॥ २० ॥

प्रियांश्च बन्धून्विषयांश्च हित्वा ये स्वर्गहेतोर्नियमं चरन्ति ।
ते विप्रयुक्ताः खलु गन्तुकामा महत्तरं बन्धनमेव भूयः ॥ २१ ॥
कायक्लमैर्यश्च तपोऽभिधानैः प्रवृत्तिमाकाङ्क्षति कामहेतोः ।
संसारदोषानपरीक्षमाणो दुःखेन सोऽन्विच्छति दुःखमेव ॥ २२ ॥
त्रासश्च नित्यं मरणात्प्रजानां यत्नेन चेच्छन्ति पुनःप्रसूतिम् ।
सत्यां प्रवृत्तौ नियतश्च मृत्युस्तत्रैव मग्ना यत एव भीताः ॥ २३ ॥
इहार्थमेके प्रविशन्ति खेदं स्वर्गार्थमन्ये श्रममाप्नुवन्ति ।
सुखार्थमाशाकृपणोऽकृतार्थः पतत्यनर्थे खलु जीवलोकः ॥ २४ ॥
न खल्वयं गर्हित एव यत्नो यो हीनमुत्सृज्य विशेषगामी ।
प्राज्ञैः समानेन परिश्रमेण कार्यं तु तद्यत्र पुनर्न कार्यम् ॥ २५ ॥
शरीरपीडा तु यदीह धर्मः सुखं शरीरस्य भवत्यधर्मः ।
धर्मेण चाप्नोति सुखं परत्र तस्मादधर्मं फलतीह धर्मः ॥ २६ ॥

20. a. sarvvai, A.

21. a. śriyañ ca bandhūn, A; ḥphaṅs-pa-rnams daṅ gñen daṅ, T; 'quitting relations, giving up excellent *viṣayas*', C; 'you give up your loved relations and the joys of the world', FP. d. 'You do not see that in the future you return again to prison' (anāgate bandhanam eva bhūyaḥ?), FP.

22. a. kāyaklamai yaś ca, A. b. pravṛrttiṁ, A.

23. b. slar-yaṅ rab-tu-ḥjug-par (punaḥpravṛttiṁ), T; 'they seek to undergo birth', C. c. 'Having been born, then they must die' (satyāṁ prasūtau?), C. d. bhītaḥ, A; ḥjigs-pa-rnams, T.

24. c. āśākyapano, A; sred-paḥi bkren-pa, T.

25. d. de ḥdir (tad atra), T.

यतः शरीरं मनसो वशेन प्रवर्तते चापि निवर्तते च ।
युक्तो दमश्चेतस एव तस्माच्चित्तादृते काष्ठसमं शरीरम् ॥ २७ ॥

आहारशुद्ध्या यदि पुण्यमिष्टं
तस्मान्मृगाणामपि पुण्यमस्ति ।
ये चापि बाह्याः पुरुषाः फलेभ्यो
भाग्यापराधेन पराङ्मुखार्थाः ॥ २८ ॥

दुःखेऽभिसंधिस्त्वथ पुण्यहेतुः सुखेऽपि कार्यो ननु सोऽभिसंधिः ।
अथ प्रमाणं न सुखेऽभिसंधिर्दुःखे प्रमाणं ननु नाभिसंधिः ॥ २९ ॥

तथैव ये कर्मविशुद्धिहेतोः
स्पृशन्त्यपस्तीर्थमिति प्रवृत्ताः ।
तत्रापि तोषो हृदि केवलोऽयं
न पावयिष्यन्ति हि पापमापः ॥ ३० ॥

स्पृष्टं हि यद्यद्गुणवद्भिरम्भस्तत्तत्पृथिव्यां यदि तीर्थमिष्टम् ।
तस्माद्गुणानेव परैमि तीर्थमापस्तु निःसंशयमाप एव ॥ ३१ ॥

इति स्म तत्तद्बहुयुक्तियुक्तं जगाद चास्तं च ययौ विवस्वान् ।
ततो हविर्धूमविवर्णवृक्षं तपःप्रशान्तं स वनं विवेश ॥ ३२ ॥

27. a. vasena, A. b. pravartate vāpi nivartate vā, A ; rab-tu-ḥjug-pa daṅ ni ldog-pa daṅ-no, T ; 'the starting and extinction of bodily action are both', C.

28. b. tasmāt mṛgāṇām, A.

30. c. de-yi sñiṅ-la tshim-pa tsam yin-te (toṣo hṛdi kevalo 'sya), T.

31. c. guṇān aiva paremi, A ; yon-tan-ldan-rnams kho-na (=guṇina eva), T ; 'one should honour this virtue', C.

32. b. vivaśvān, A. d. khrus-sar (savanaṁ), T.

अभ्युद्गतप्रज्वलिताग्निहोत्रं कृताभिषेकर्षिजनावकीर्णम् ।
जाप्यस्वनाकूजितदेवकोष्ठं धर्मस्य कर्मान्तमिव प्रवृत्तम् ॥ ३३ ॥

काश्चिन्निशास्तत्र निशाकराभः परीक्षमाणश्च तपांस्युवास ।
सर्वं परिक्षेप्य तपश्च मत्वा तस्मात्तपःक्षेत्रतलाज्जगाम ॥ ३४ ॥

अन्वव्रजन्नाश्रमिणस्ततस्तं तद्रूपमाहात्म्यगतैर्मनोभिः ।
देशादनार्यैरभिभूयमानान्महर्षयो धर्ममिवापयान्तम् ॥ ३५ ॥

ततो जटावल्कलचीरखेलांस्तपोधनांश्चैव स तान्ददर्श ।
तपांसि चैषामनुरुध्यमानस्तस्थौ शिवे श्रीमति वृक्षमूले ॥ ३६ ॥

अथोपसृत्याश्रमवासिनस्तं मनुष्यवर्यं परिवार्य तस्थुः ।
वृद्धश्च तेषां बहुमानपूर्वं कलेन साम्ना गिरमित्युवाच ॥ ३७ ॥

त्वय्यागते पूर्ण इवाश्रमोऽभूत्संपद्यते शून्य इव प्रयाते ।
तस्मादिमं नार्हसि तात हातुं जिजीविषोर्देहमिवेष्टमायुः ॥ ३८ ॥

ब्रह्मर्षिराजर्षिसुरर्षिजुष्टः पुण्यः समीपे हिमवान्हि शैलः ।
तपांसि तान्येव तपोधनानां यत्संनिकर्षाद्बहुलीभवन्ति ॥ ३९ ॥

33. d. chos-kyi lam-gyi las-kyi mthaḥ (dharmādhvakarmāntam), T.

34. c. dkaḥ-thub thams-cad yoṅs-su-rtogs-śiṅ mkhyen-gyur-nas (sarvam pari . . . ya tapaś ca matvā), T; 'he did not see the real truth in them (i.e. the austerities)', C; parijñāya, or paricchidya, Böhtlingk; parīkṣyātha, Kern; matyā, Cappeller.

35. d. maharṣayau, A.

36. a. °cīracelāṁs, Hultzsch. d. śiṅ-gi rtsa-ba (vṛkṣamūle), T.

37. a. °vāśinas, A. d. dus-kyi (for kyis?) zhi-bas (kālasya sāmnā, or kālena), T.

39. b. himavāṁ, A. d. yatsaṁnikaṣād, A.

तीर्थानि पुण्यान्यभितस्तथैव सोपानभूतानि नभस्तलस्य ।
जुष्टानि धर्मात्मभिरात्मवद्भिर्देवर्षिभिश्चैव महर्षिभिश्च ॥ ४० ॥

इतश्च भूयः क्षममुत्तरैव दिक्सेवितुं धर्मविशेषहेतोः ।
न तु क्षमं दक्षिणतो बुधेन पदं भवेदेकमपि प्रयातुम् ॥ ४१ ॥

तपोवनेऽस्मिन्नथ निष्क्रियो वा संकीर्णधर्मापतितोऽशुचिर्वा ।
दृष्टस्त्वया येन न ते विवत्सा तद्ब्रूहि यावद्रुचितोऽस्तु वासः ॥ ४२ ॥

इमे हि वाञ्छन्ति तपःसहायं तपोनिधानप्रतिमं भवन्तम् ।
वासस्त्वया हीन्द्रसमेन सार्धं बृहस्पतेरभ्युदयावहः स्यात् ॥ ४३ ॥

इत्येवमुक्ते स तपस्विमध्ये तपस्विमुख्येन मनीषिमुख्यः ।
भवप्रणाशाय कृतप्रतिज्ञः स्वं भावमन्तर्गतमाचचक्षे ॥ ४४ ॥

ऋज्वात्मनां धर्मभृतां मुनीनामिष्टातिथित्वात्स्वजनोपमानाम् ।
एवंविधैर्मां प्रति भावजातैः प्रीतिः परा मे जनितश्च मानः ॥ ४५ ॥

40. cd. ātmavadbhi re(corrected to de?)varṣibhirś caiva nṛparṣibhiś ca. A ; lha-yi·draṅ-sroṅ-rnams daṅ draṅ-sroṅ chen-po ni . . . bdag-ñid chen-po-rnams-kyis (mahātmabhir devarsibhiś caiva maharsibhiś ca, or, amending to bdag-ñid ldan-pa, ātmavadbhir), T.

41. b. °viseṣa°, A. c. na ku(?) kṣaman (marginal comment, na tu yuktam), A ; T omits tu.

42. b. °dharmā patito, Co. ; °dharme patito, Gawroński. d. tad bru(?ū?)hi, A. re-zhig (tāvad), T.

43. a. vācchanti, A. d. phur-bu-yi yaṅ mṅon-par-mtho-ba ḥdren-pa (bṛhaspater apy abhyudayāvahaḥ, one syllable in excess), T ; bṛhaspater apy udayāvahaḥ, Lüders.

44. a. ukte (e marked as wrong), A ; de-skad ces smras-te, T ; uktaḥ, Böhtlingk. b. manīkhimukhyaḥ, A. d. raṅ-bzhin (svabhāvam?), T.

45. b. svajanopamānaṁ, A ; raṅ-gi skye-bo daṅ mtshuṅs-paḥi . . . thub-pa-rnams, T. d. prītiḥ parā tma (corrected to me, or vice versa ?) janitaś ca mārggaḥ, A ; bdag-gi dgaḥ-ba mchog daṅ bkur-ste skyes-par-gyur, T.

स्निग्धाभिराभिर्हृदयंगमाभिः समासतः स्नात इवास्मि वाग्भिः ।
रतिश्च मे धर्मनवग्रहस्य विस्पन्दिता संप्रति भूय एव ॥ ४६ ॥
एवं प्रवृत्तान् भवतः शरण्यानतीव संदर्शितपक्षपातान् ।
यास्यामि हित्वेति ममापि दुःखं यथैव बन्धूंस्त्यजतस्तथैव ॥ ४७ ॥
स्वर्गाय युष्माकमयं तु धर्मो ममाभिलाषस्त्वपुनर्भवाय ।
अस्मिन्वने येन न मे विवत्सा भिन्नः प्रवृत्त्या हि निवृत्तिधर्मः ॥४८॥
तन्नारतिर्मे न परापचारो वनादितो येन परिव्रजामि ।
धर्मे स्थिताः पूर्वयुगानुरूपे सर्वे भवन्तो हि महर्षिकल्पाः ॥ ४९ ॥
ततो वचः सूनृतमर्थवच्च सुश्लक्ष्णमोजस्वि च गर्वितं च ।
श्रुत्वा कुमारस्य तपस्विनस्ते विशेषयुक्तं बहुमानमीयुः ॥ ५० ॥
कश्चिद्द्विजस्तत्र तु भस्मशायी प्रांशुः शिखी दारवचीरवासाः ।
आपिङ्गलाक्षस्तनुदीर्घघोणः कुण्डैकहस्तो गिरमित्युवाच ॥ ५१ ॥
धीमन्नुदारः खलु निश्चयस्ते यस्त्वं युवा जन्मनि दृष्टदोषः ।
स्वर्गापवर्गौ हि विचार्य सम्यग्यस्यापवर्गे मतिरस्ति सोऽस्ति.॥ ५२ ॥
यज्ञैस्तपोभिर्नियमैश्च तैस्तैः स्वर्गं यियासन्ति हि रागवन्तः ।
रागेण सार्धं रिपुणेव युद्ध्वा मोक्षं परीप्सन्ति तु सत्त्ववन्तः ॥ ५३ ॥

46. a. ābhi hṛdayaṁ°, A. c. kun-nas ḥdzin-med chos-can (dharmānavagrahasya, against the metre), T.

47. d. bandhūs, A.

48. d. pravṛttyau, A.

50. a sūnṛtram, A. b. sñiṅ-po dan ldan-pa (garbhitaṁ), T.

51. d. kuṇḍ · k(?v)ahasto girim, A (much rubbed); lag-gcig spyi-blugs ldan-pas, T.

52. a. rgya-chen blo-ldan-zhiṅ (dhimān udāraḥ), T. niścayas tte, A. b. T omits yaḥ. c. °varggo, A.

53. b. yiyāsyaṁti, A.

तद्बुद्धिरेषा यदि निश्चिता ते तूर्णं भवान् गच्छतु विन्ध्यकोष्ठम् ।
असौ मुनिस्तत्र वसत्यराडो यो नैष्ठिके श्रेयसि लब्धचक्षुः ॥ ५४ ॥
तस्माद्भवाञ्छ्रोष्यति तत्त्वमार्गं सत्यां रुचौ संप्रतिपत्स्यते च ।
यथा तु पश्यामि मतिस्तथैषा तस्यापि यास्यत्यवधूय बुद्धिम् ॥५५॥
स्पष्टोच्चघोणं विपुलायताक्षं ताम्राधरौष्ठं सिततीक्ष्णदंष्ट्रम् ।
इदं हि वक्त्रं तनुरक्तजिह्वं ज्ञेयार्णवं पास्यति कृत्स्नमेव ॥ ५६ ॥
गम्भीरता या भवतस्त्वगाधा या दीप्तता यानि च लक्षणानि ।
आचार्यकं प्राप्स्यसि तत्पृथिव्यां यन्नर्षिभिः पूर्वयुगेऽप्यवाप्तम् ॥५७॥

परममिति ततो नृपात्मज-
स्तमृषिजनं प्रतिनन्द्य निर्ययौ ।
विधिवदनुविधाय तेऽपि तं
प्रविविशुराश्रमिणस्तपोवनम् ॥ ५८ ॥

इति बुद्धचरिते महाकाव्ये तपोवनप्रवेशो नाम सप्तमः सर्गः ॥ ७ ॥

54. d. yau ṇeṣṭhike śreyasi, A.

55. c. e.c.; matis tavaiṣā, A; blo-gros de de-ltar (matis tathā sā), T. d. yāsyāty, A.

56. a. paṣtośćaghoṇam, A; gsal-zhiṅ mtho-baḥi śaṅs, T. b. tāmrādharauṣṭraṁ, A. d. ḥgro-ba (yāsyati), T; 'you will drink up entirely the *jñeya*-water', C. kṛtsṇam, A.

57. d. sṅon-gyi bskal-par draṅ-sroṅ-gis gaṅ ma-mthoṅ-baḥi (=yad ṛṣibhiḥ pūrvayuge na dṛṣṭam), T; 'what was not obtained by the ṛṣis of old', C.

## CANTO VIII

ततस्तुरङ्गावचरः स दुर्मनास्तथा वनं भर्तरि निर्ममे गते ।
चकार यत्नं पथि शोकनिग्रहे तथापि चैवास्रु न तस्य चिक्षिये ॥१॥

यमेकरात्रेण तु भर्तुराज्ञया जगाम मार्गं सह तेन वाजिना ।
इयाय भर्तुर्विरहं विचिन्तयंस्तमेव पन्थानमहोभिरष्टभिः ॥ २ ॥

हयश्च सौजा विचचार कन्थकस्तताम भावेन बभूव निर्मदः ।
अलंकृतश्चापि तथैव भूषणैरभूद्गतश्रीरिव तेन वर्जितः ॥ ३ ॥

निवृत्य चैवाभिमुखस्तपोवनं
भृशं जिहेषे करुणं मुहुर्मुहुः ।
क्षुधान्वितोऽप्यध्वनि शष्पमम्बु वा
यथा पुरा नाभिननन्द नाददे ॥ ४ ॥

ततो विहीनं कपिलाह्वयं पुरं महात्मना तेन जगद्धितात्मना ।
क्रमेण तौ शून्यमिवोपजग्मतुर्दिवाकरेणेव विनाकृतं नभः ॥ ५

1. a. durmmanās, A. d. ciksipe, A; khog (for khogs or bkog, Weller wrongly khob), T. 'he kept on weeping', C.

3. a. c.c.; hayaś ca saujasvi cacāra, A; mgyogs-ḥgro ñid kyaṅ mdaṅs-med rgyu-ba-ste (hayo 'py anojasvi cacāra), T; 'the good horse rushed on, naturally speedy and majestic in appearance', C; saujā vicacāla, Böhtlingk. b. ḥthon-pa med-pas (=niḥsārābhāvena or niḥsṛtābhāvena), T.

4. d. purā bhinananda (one syllable short), A; ji-ltar sňon bzhin mnon-par ma-dgaḥ, T.

5. a. pura, A. cd. °jagmatu divā°, A.

सपुण्डरीकैरपि शोभितं जलैरलंकृतं पुष्पधरैर्नगैरपि ।
तदेव तस्योपवनं वनोपमं गतप्रहर्षैर्न रराज नागरैः ॥ ६ ॥

ततो भ्रमद्भिर्दिशि दीनमानसैरनुज्ज्वलैर्बाष्पहतेक्षणैर्नरैः ।
निवार्यमाणाविव तावुभौ पुरं शनैरपस्नातमिवाभिजग्मतुः ॥ ७ ॥

निशाम्य च स्रस्तशरीरगामिनौ
विनागतौ शाक्यकुलर्षभेण तौ ।
मुमोच बाष्पं पथि नागरो जनः
पुरा रथे दाशरथेरिवागते ॥ ८ ॥

अथ ब्रुवन्तः समुपेतमन्यवो जनाः पथि च्छन्दकमागतास्रवः ।
क्व राजपुत्रः पुरराष्ट्रनन्दनो हृतस्त्वयासाविति पृष्ठतोऽन्वयुः ॥ ९ ॥

ततः स तान् भक्तिमतोऽब्रवीज्जनान्नरेन्द्रपुत्रं न परित्यजाम्यहम् ।
रुदन्नहं तेन तु निर्जने वने गृहस्थवेशश्च विसर्जिताविति ॥ १० ॥

इदं वचस्तस्य निशम्य ते जनाः सुदुष्करं खल्विति निश्चयं ययुः ।
पतद्धि जह्रुः सलिलं न नेत्रजं मनो निनिन्दुश्च फलोत्थमात्मनः ॥ ११ ॥

6. b. °dharai nnagair, A.

7. a. bhramadbhi diśi, A. b. hataikṣaṇair nnarai, A. c. nivāryamā* (?r,?n)āv iva, A. d. ayasnātam (corrected in later hand to aja°), A; log-paḥi khrus, T; 'as if at a funeral', C.

8. a. niśamya, A; mthoṅ-nas, T; 'seeing', C. b. śākyaḥi rigs-kyi draṅ-sroṅ (śākyakularṣiṇā), T; °arṣabhena, A.

9. b. āgatāsravaḥ, A. d. khyod-kyis gaṅ-du bor (kva. . . hitas (to hi, 'leave') tvayā), T; 'you stole and took him away', C. pṛṣṭhatau, A.

10. ab. bravīt janā narendra°, A.

11. a. niśāmya, A; thos-nas, T. b. vismayaṁ yayuḥ, Lüders; ṅes-par soṅ-gyur-la, T; 'were startled and considered it extraordinary', C; 'they exclaimed, "There are few who would do this",' FP. c. hgyel-zhiṅ mig-skyes chu ni rnam-par-ḥthor-ba-ste (patad vijahruḥ salilaṁ netrajam), T; 'they sobbed and they wailed, their tears joining flowed downwards', C. d. phalārtha(?)m ātmanaḥ, A; bdag-ñid-kyis (for kyi) ni ḥbras-bu loṅ, T.

अथोचुरद्यैव विशाम तद्वनं
गतः स यत्र द्विपराजविक्रमः ।
जिजीविषा नास्ति हि तेन नो विना
यथेन्द्रियाणां विगमे शरीरिणाम् ॥ १२ ॥

इदं पुरं तेन विवर्जितं वनं
वनं च तत्तेन समन्वितं पुरम् ।
न शोभते तेन हि नो विना पुरं
मरुत्वता वृत्रवधे यथा दिवम् ॥ १३ ॥

पुनः कुमारो विनिवृत्त इत्यथो
गवाक्षमालाः प्रतिपेदिरेऽङ्गनाः ।
विविक्तपृष्ठं च निशाम्य वाजिनं
पुनर्गवाक्षाणि पिधाय चुक्रुशुः ॥ १४ ॥

प्रविष्टदीक्षस्तु सुतोपलब्धये व्रतेन शोकेन च खिन्नमानसः ।
जजाप देवायतने नराधिपश्चकार तास्ताश्च यथाशयाः क्रियाः॥१५॥

ततः स बाष्पप्रतिपूर्णलोचनस्तुरङ्गमादाय तुरङ्गमानुगः ।
विवेश शोकाभिहतो नृपक्षयं युधापिनीते रिपुणेव भर्तरि ॥ १६ ॥

12. b. gñis-skyes rgyal-poḥi (dvijarāja°), T. d. lus-can dbaṅ-po ma-tshaṅ-rnams-kyi ji-lta-bar (=yathā śarīriṇāṁ vikalendriyāṇām), T.

13. a. vivarjita, A. b. yat tena, Ujjvaladatta on Uṇādisūtras, i, 156. c. tena vinādya no, Ujjvaladatta *ib.*

14. b. pratipedire ngavyaḥ, A. c. niśa (śa mutilated and next syllable lost by tear), A ; mthoṅ-gyur-nas, T. d. gavākṣān apidhāya, Prasāda.

15. a. sutopabdhaye (one syllable short), A ; sras-po ñer-thob-phyir, T. d. yathāśrayāḥ, A ; bsam-pa ji-ltar, T.

16. a. pratigh(?)ūrṇṇa°, A ; rab-tu-gaṅ-ba, T. b. turaṅgamānuṣ(?)aḥ, A ; mgyogs-ḥgro rjes-su-ḥgro-ba-ste, T. cd. nṛpakṣayaṁ dhāpinīte (one syllable short), A ; gyul-ḥgyed-pa-na . . . khyer-ba . . . mi-skyoṅ khaṅ-par, T.

विगाह्यमानश्च नरेन्द्रमन्दिरं विलोकयन्नश्रुवहेन चक्षुषा ।
स्वरेण पुष्टेन रुराव कन्थको जनाय दुःखं प्रतिवेदयन्निव ॥ १७ ॥
ततः खगाश्च क्षयमध्यगोचराः समीपबद्धास्तुरगाश्च सत्कृताः ।
हयस्य तस्य प्रतिसस्वनुः स्वनं नरेन्द्रसूनोरुपयानशङ्किनः ॥ १८ ॥
जनाश्च हर्षातिशयेन वञ्चिता जनाधिपान्तःपुरसंनिकर्षगाः ।
यथा हयः कन्थक एष हेषते ध्रुवं कुमारो विशतीति मेनिरे ॥१९॥
अतिप्रहर्षादथ शोकमूर्छिताः कुमारसंदर्शनलोललोचनाः ।
गृहाद्विनिश्चक्रमुराशया स्त्रियः शरत्पयोदादिव विद्युतश्चलाः ॥२०॥

विलम्बकेश्यो मलिनांशुकाम्बरा
निरञ्जनैर्बाष्पहतेक्षणैर्मुखैः ।
स्त्रियो न रेजुर्मृजया विनाकृता
दिवीव तारा रजनीक्षयारुणाः ॥ २१ ॥

अरक्ततामैश्चरणैरनूपुरैरकुण्डलैरार्जवकन्धरैर्मुखैः ।
स्वभावपीनैर्जघनैरमेखलैरहारयोक्त्रैर्मुषितैरिव स्तनैः ॥ २२ ॥
निरीक्ष्य ता बाष्पपरीतलोचना निराश्रयं छन्दकमश्वमेव च ।
विषण्णवक्त्रा रुरुदुर्वराङ्गना वनान्तरे गाव इवर्षभोज्झिताः ॥ २३ ॥

17. c. bsal-baḥi dbyaṅs-kyis (svareṇa dīptena?), T ; ' wailing terrifically " C. d. prativedayaṁti ca, A ; rab-tu-rtogs-ḥjug bzhin, T.

18. d. e.c. Kern ; °śaṅkitāḥ, A.

19. a. heṣātiśayena, Gawroński. cañcitā, A ; bslus-paḥi, T.

21. a. vilambaveśyo, A ; lan-bu rnam-par-ḥphyaṅ-zhiṅ, T. °kābarā, A. b. hataikṣanair mmuṣṭy(?ṣṇy?)aiḥ, A. c. kṛṣṇā vivarṇṇā majayā, A ; byi-dor daṅ bral bud-med rigs-rnams mdzes ma-gyur, T.

22. b. ārjavakarṇṇikair, A ; mgrin-pa draṅ-po-rnams, T. c. °pīnai jaghanair, A. d. T omits iva. stastaih, A ; nu-ma, T.

23. a. nirīkṣa tā bāṣpaparīritalocana, A ; mig ni mchi-ma ldan de-rnams-kyis mthoṅ-nas, T. d. nags-mthar (vanānte), T. ivārṣabhojitāḥ, A ; khyu-mchog daṅ bral-ba, T.

ततः सबाष्पा महिषी महीपतेः
प्रनष्टवत्सा महिषीव वत्सला ।
प्रगृह्य बाहू निपपात गौतमी
विलोलपर्णा कदलीव काञ्चनी ॥ २४ ॥

हतत्विषोऽन्याः शिथिलांसबाहवः
स्त्रियो विषादेन विचेतना इव ।
न चुक्रुशुर्नाश्रु जहुर्न शश्वसु-
र्न चेलुरासुर्लिखिता इव स्थिताः ॥ २५ ॥

अधीरमन्याः पतिशोकमूर्छिता
विलोचनप्रस्रवणैर्मुखैः स्त्रियः ।
सिषिञ्चिरे प्रोषितचन्दनान् स्तना-
न्धराधरः प्रस्रवणैरिवोपलान् ॥ २६ ॥

मुखैश्च तासां नयनाम्बुताडितै रराज तद्राजनिवेशनं तदा ।
नवाम्बुकालेऽम्बुदवृष्टिताडितैः स्रवज्जलैस्तामरसैर्यथा सरः ॥ २७ ॥

सुवृत्तपीनाङ्गुलिभिर्निरन्तरैरभूषणैर्गूढसिरैर्वराङ्गनाः ।
उरांसि जघ्नुः कमलोपमैः करैः स्वपल्लवैर्वातचला लता इव ॥२८॥

24. b. praṇaṣṭavatsā, A.

25. a. hataḥ(visarga marked as wrong)dviṣo nyāḥ śithilātmabāhavaḥ, A; dpuṅ-ba lag-pa sñoms-śiṅ gzi-brjid bcom-pa . . . gzhan-rnams, T. c. cukruśu nāśru, A. cd. śaśva nna celar āsu llikhitā (one syllable short), A; dbugs-med-par gyo-bral ri-mo bris-pa, T.

26. b. °praśravaṇair, A. c. siṣ(?s?)iñcire proṣitacandanā, A; tsan-dan rab-bskus (so Peking, bskud Weller) . . . rnam-par-ḥthor (vijahrire prokṣitacandanān, or vicakrire from kṝ), T. d. praśravaṇair, A.

28. b. varāṅgaṇāḥ (corrected to nāḥ), A.

करप्रहारप्रचलैश्च ता बभुस्तथापि नार्यः सहितोन्नतैः स्तनैः ।
वनानिलाघूर्णितपद्मकम्पितै रथाङ्गनाम्नां मिथुनैरिवापगाः ॥२९॥
यथा च वक्षांसि करैरपीडयंस्तथैव वक्षोभिरपीडयन् करान् ।
अकारयंस्तत्र परस्परं व्यथाः कराग्रवक्षांस्यबला दयालसाः ॥३०॥
ततस्तु रोषप्रविरक्तलोचना विषादसंबन्धिकषायगद्गदम् ।
उवाच निश्वासचलत्पयोधरा विगाढशोकाश्रुधरा यशोधरा ॥३१॥

निशि प्रसुप्तामवशां विहाय मां
गतः क्व स च्छन्दक मन्मनोरथः ।
उपागते च त्वयि कन्थके च मे
समं गतेषु त्रिषु कम्पते मनः ॥ ३२ ॥

अनार्यमस्निग्धममित्रकर्म मे नृशंस कृत्वा किमिहाद्य रोदिषि ।
नियच्छ बाष्पं भव तुष्टमानसो न संवदत्यश्रु च तच्च कर्म ते ॥३३॥

प्रियेण वश्येन हितेन साधुना
त्वया सहायेन यथार्थकारिणा ।
गतोऽर्यपुत्रो ह्यपुनर्निवृत्तये
रमस्व दिष्ट्या सफलः श्रमस्तव ॥ ३४ ॥

29. ab. babhur yathāpi, A; de-lta-na yaṅ . . . mdzes-par-gyur, T. d. rathāṅgaṇāmnā mithuner, A.

30. a. vakṣāsi karair apīḍayas, A.

31. b. e.c. Kern; viṣādasambandha°, A; sems-ḥkhral-gyis sbrel (viṣādasaṁnaddha°?), T; viṣādasaṁbaddha°, Böhtlingk.

32. a. avasāṁ, A. b. T omits man. c. tvāyi, A.

33. ab. kho-mo . . . phul-phyuṅ (=me 'tiśāyi?), T. c. So Cowell; nigaccha, A; ma-ḥdon (mā muñca ?), T. d. aśru ru(?cu?) tac ca, A.

34. a. priyena, A. d. sems ni dgaḥ-bar gyis (ramasva citte or cittyāṁ), T.

वरं मनुष्यस्य विचक्षणो रिपुर्न मित्रमप्राज्ञमयोगपेशलम् ।
सुहृद्ब्रुवेण ह्यविपश्चिता त्वया कृतः कुलस्यास्य महानुपप्लवः ॥३५॥

इमा हि शोच्या व्यवमुक्तभूषणाः
प्रसक्तबाष्पाविलरक्तलोचनाः ।
स्थितेऽपि पत्यौ हिमवन्महीसमे
प्रनष्टशोभा विधवा इव स्त्रियः ॥ ३६ ॥

इमाश्च विक्षिप्तविटङ्कबाहवः प्रसक्तपारावतदीर्घनिस्वनाः ।
विनाकृतास्तेन सहावरोधनैर्भृशं रुदन्तीव विमानपङ्क्तयः ॥ ३७ ॥

अनर्थकामोऽस्य जनस्य सर्वथा
• तुरङ्गमोऽपि ध्रुवमेष कन्थकः ।
जहार सर्वस्वमितस्तथा हि मे
जने प्रसुप्ते निशि रत्नचौरवत् ॥ ३८ ॥

यदा समर्थः खलु सोढुमागता-
निषुप्रहारानपि किं पुनः कशाः ।
गतः कशापातभयात्कथं न्वयं
श्रियं गृहीत्वा हृदयं च मे समम् ॥ ३९ ॥

35. c. neś-par mdźaḥ-bśes (suhṛddhruveṇa), T; °bruveṇa or °dhruveṇa, A; ‘professing to be loyal’, C.

36. b. praśaktaṣpāvila° (one syllable short), A; rab-chags dri-mas (for mchi-mas ?) ḥdres-śiṅ, T. c. himavatmahī°, A.

37. b. praśakta°, A. c. sahaiva rodhanair, A; pho-braṅ-ḥkhor daṅ bcas, T. d. °paktayaḥ, A.

•39. a. mgyogs-ḥgro ḥdis ni. . . nus śes-grags-na (=ayaṁ hayaḥ samarthaḥ kila), T. c. kaśāyāta°, A. e.c. Kern; kathat katha tv ayaṁ (two syllables in excess, mark against first two), A; yin-nam-ci (kathaṁ nu ?), T.

अनार्यकर्मा भृशमद्य हेषते
नरेन्द्रधिष्ण्यं प्रतिपूरयन्निव ।
यदा तु निर्वाहयति स्म मे प्रियं
तदा हि मूकस्तुरगाधमोऽभवत् ॥ ४० ॥

यदि ह्यहेषिष्यत बोधयन् जनं
खुरैः क्षितौ वाप्यकरिष्यत ध्वनिम् ।
हनुस्वनं वाजनिष्यदुत्तमं
न चाभविष्यन्मम दुःखमीदृशम् ॥ ४१ ॥

इतीह देव्याः परिदेविताश्रयं निशम्य बाष्पग्रथिताक्षरं वचः ।
अधोमुखः साश्रुकलः कृताञ्जलिः शनैरिदं छन्दक उत्तरं जगौ ॥४२॥

विगर्हितुं नार्हसि देवि कन्थकं
न चापि रोषं मयि कर्तुमर्हसि ।
अनागसौ स्वः समवेहि सर्वशो
गतो नृदेवः स हि देवि देववत् ॥ ४३ ॥

अहं हि जानन्नपि राजशासनं बलात्कृतः कैरपि दैवतैरिव ।
उपानयं तूर्णमिमं तुरङ्गमं तथान्वगच्छं विगतश्रमोऽध्वनि ॥ ४४ ॥

40. b. yoṅs-su-gaṅ-ba (paripūrayann), T. d. mgyogs-ḥgro lkug-la thaṅ-chad gyur (mūkas turagaśramo 'bhavat ?), T.

41. b. khitau, A.

42. a. So Co.; paridevatāśrayan, A. b. niśāmya, A; thos-gyur-nas, T. °grathikṣaram (one syllable short), A. c. T omits kalaḥ; 'gathering his tears', C.

43. a. nāsi devi (one syllable short), A; lha-mo . ∴ ḥos min zhiṅ, T. c. bkra-śis kun-gyis (sarvāśiṣā for sarvaśo ?), T.

44. c. upānaya, A.

व्रजन्नयं वाजिवरोऽपि नास्पृश-
न्महीं खुराग्रैर्विधृतैरिवान्तरा ।
तथैव दैवादिव संयताननो
हनुस्वनं नाकृत नाप्यहेषत ॥ ४५ ॥

यतो बहिर्गच्छति पार्थिवात्मजे
तदाभवद्द्वारमपावृतं स्वयम् ।
तमश्च नैशं रविणेव पाटितं
ततोऽपि दैवो विधिरेष गृह्यताम् ॥ ४६ ॥

यदप्रमत्तोऽपि नरेन्द्रशासना-
द्गृहे पुरे चैव सहस्रशो जनः ।
तदा स नाबुध्यत निद्रया हृत-
स्ततोऽपि दैवो विधिरेष गृह्यताम् ॥ ४७ ॥

यतश्च वासो वनवाससंमतं
निसृष्टमस्मै समये दिवौकसा ।
दिवि प्रविद्धं मुकुटं च तद्धृतं
ततोऽपि दैवो विधिरेष गृह्यताम् ॥ ४८ ॥

तदेवमावां नरदेवि दोषतो
न तत्प्रयातं प्रति गन्तुमर्हसि ।
न कामकारो मम नास्य वाजिनः
कृतानुयात्रः स हि दैवतैर्गतः ॥ ४९ ॥

46. a. yadā bahir gacchati pārthivātmajas, A ; gaṅ-las sa-skyoṅ bdag-ñid skyes-pa gśegs-pa-na, T.

47. Not in C. b. gṛhai purai, A.

48. Not in C.

49. b. tatprayātemm, A.

इति प्रयाणं बहुदेवमद्भुतं निशम्य तास्तस्य महात्मनः स्त्रियः ।
प्रनष्टशोका इव विस्मयं ययुर्मनोज्वरं प्रव्रजनात्तु लेभिरे ॥ ५० ॥

विषादपारिप्लवलोचना ततः
प्रनष्टपोता कुररीव दुःखिता ।
विहाय धैर्यं विरुराव गौतमी
तताम चैवाश्रुमुखी जगाद च ॥ ५१ ॥

महोर्मिमन्तो मृदवोऽसिताः शुभाः
पृथक्पृथङ्मूलरुहाः समुद्गताः ।
प्रवेरितास्ते भुवि तस्य मूर्धजा
नरेन्द्रमौलीपरिवेष्टनक्षमाः ॥ ५२ ॥

प्रलम्बबाहुर्मृगराजविक्रमो महर्षभाक्षः कनकोज्ज्वलद्युतिः ।
विशालवक्षा घनदुन्दुभिस्वनस्तथाविधोऽप्याश्रमवासमर्हति ॥५३॥

अभागिनी नूनमियं वसुंधरा
तमार्यकर्माणमनुत्तमं पतिम् ।
गतस्ततोऽसौ गुणवान् हि तादृशो
नृपः प्रजाभाग्यगुणैः प्रसूयते ॥ ५४ ॥

50. a. bahudhevam adbhutaṁ, A ; lha-yi mtshar maṅ, T. d. pravrajanārt tu, A. yid-la ḥbar-ba (manojvalaṁ), T.

51. b. pranapta(corrected to ṣṭa ?)potā, A. c. gotamī, A.

52. b. pṛthak mūla°, A. d. °pariveṣṭyamakṣamaḥ, A.

53. b. mahaṣabhākṣaḥ, A. c. °dundubhisvanās, A.

54. Not in T. a. abhāge(? gi ?)nī, A. c. tātas tato, A ; gatas tato, Co.'s MSS. gunavā hi, A.

सुजातजालावतताङ्गुली मृदू
निगूढगुल्फौ बिसपुष्पकोमलौ ।
वनान्तभूमिं कठिनां कथं नु तौ
सचक्रमध्यौ चरणौ गमिष्यतः ॥ ५५ ॥

विमानपृष्ठे शयनासनोचितं
महार्हवस्त्रागुरुचन्दनार्चितम् ।
कथं नु शीतोष्णजलागमेषु त-
च्छरीरमोजस्वि वने भविष्यति ॥ ५६ ॥

कुलेन सत्त्वेन बलेन वर्चसा श्रुतेन लक्ष्म्या वयसा च गर्वितः ।
प्रदातुमेवाभ्युचितो न याचितुं कथं स भिक्षां परतश्चरिष्यति ॥५७॥

शुचौ शयित्वा शयने हिरण्मये प्रबोध्यमानो निशि तूर्यनिस्वनैः ।
कथं बत स्वप्स्यति सोऽद्य मे व्रती पटैकदेशान्तरिते महीतले ॥५८॥

इमं प्रलापं करुणं निशम्य ता
भुजैः परिष्वज्य परस्परं स्त्रियः ।
विलोचनेभ्यः सलिलानि तत्यजु-
र्मधूनि पुष्पेभ्य इवेरिता लताः ॥ ५९ ॥

55. b. e.c.; viṣapuṣpa°, A; padmaḥi rtsa-ba ltar ḥjam (bisapadmakomalau), T. c. draṅ-sroṅ-rnams-kyi nags-mthaḥi sa-la (vanāntabhūmiṁ vanināṁ?), T.

56. b. candanāccitaṁ, A; tsan-dan spras-śiṅ, T. c. °oṣṇajālā°, A. d. skor (bhramiṣyati), T.

57. c. e.c. Böhtlingk; abhyudito, A; mṅon-ḥoṅs-pa (=abhyudito, but read ḥos, abhyucito ?), T; 'he ought to give, there is nothing for him to ask for', C.

58. b. °niśvanaiḥ, A.

ततो धरायामपतद्यशोधरा विचक्रवाकेव रथाङ्गसाह्वया ।
शनैश्च तत्तद्विललाप विक्लवा मुहुर्मुहुर्गद्गदरुद्धया गिरा ॥ ६० ॥

स मामनाथां सहधर्मचारिणी-
मपास्य धर्मं यदि कर्तुमिच्छति ।
कुतोऽस्य धर्मः सहधर्मचारिणीं
विना तपो यः परिभोक्तुमिच्छति ॥ ६१ ॥

शृणोति नूनं स न पूर्वपार्थिवा-
न्महासुदर्शप्रभृतीन् पितामहान् ।
वनानि पत्नीसहितानुपेयुष-
स्तथा हि धर्मं मदृते चिकीर्षति ॥ ६२ ॥

मखेषु वा वेदविधानसंस्कृतौ
न दंपती पश्यति दीक्षितावुभौ ।
समं बुभुक्षू परतोऽपि तत्फलं
ततोऽस्य जातो मयि धर्ममत्सरः ॥ ६३ ॥

ध्रुवं स जानन्मम धर्मवल्लभो मनः प्रियेर्ष्याकलहं मुहुर्मिथः ।
सुखं विभीर्मामपहाय रोषणां महेन्द्रलोकेऽप्सरसो जिघृक्षति ॥ ६४ ॥

60. c. T omits śanaiḥ. d. T omits ruddhayā. gadgaya(corrected to da ?)ruddhayā girāḥ, A.

61. a. anāthā, A. d. viṇā, A.

62. a. A omits na, leaving gap; ma-thos, T. d. e.c.; A omits hi; de-ltar ltos (tathā nu ?), T; tathā sa, Co.; tataḥ sa, Gawroński.

63. b. sa dampatī, Lüders. c. e.c. Cowell; parito pi, A; gzhan-du (paratra, omitting api), T; 'in the hereafter', C.

64. b. priyeṣyākalaham mahur, A; sdug daṅ phan-tshun phrag-dog-ciṅ yaṅ-yaṅ rtsod-par, T; priye 'py ākalahaṁ muhur, Co.

इयं तु चिन्ता मम कीदृशं नु ता
वपुर्गुणं बिभ्रति तत्र योषितः ।
वने यदर्थं स तपांसि तप्यते
श्रियं च हित्वा मम भक्तिमेव च ॥ ६५ ॥

न खल्वियं स्वर्गसुखाय मे स्पृहा
न तज्जनस्यात्मवतोऽपि दुर्लभम् ।
स तु प्रियो मामिह वा परत्र वा
कथं न जह्यादिति मे मनोरथः ॥ ६६ ॥

अभागिनी यद्यहमायतेक्षणं
शुचिस्मितं भर्तुरुदीक्षितुं मुखम् ।
न मन्दभाग्योऽर्हति राहुलोऽप्ययं
कदाचिदङ्के परिवर्तितुं पितुः ॥ ६७ ॥

अहो नृशंसं सुकुमारवर्चसः सुदारुणं तस्य मनस्विनो मनः ।
कलप्रलापं द्विषतोऽपि हर्षणं शिशुं सुतं यस्त्यजतीदृशं बत ॥६८॥

ममापि कामं हृदयं सुदारुणं शिलामयं वाप्ययसोऽपि वा कृतम् ।
अनाथवच्छ्रीरहिते सुखोचिते वनं गते भर्तरि यन्न दीर्यते ॥६९॥

65. b. vapuggunaṁ, A. d. bud-med (striyaṁ for śriyaṁ), T.

66. b. durllabhaṁḥ, A ; rñed-par dkaḥ-ba-min (na . . . 'sti durlabham ?), T ; hi durlabham, Kern ; 'tidurlabham, Böhtlingk. d. jakṣād iti, A ; spoṅ zhes, T.

67. a. abhāginī, A. c. mandabhāgyo hati, A.

68. a. nṛsaṁsaṁ śukumāra°, A. d. °īdṛśaṁ vataḥ, A ; ḥdi-ḥdra kye-ma, T.

69. a. samāpi, A ; bdag-gi ḥdod-paḥi sems yaṅ (mamāpi kāmahṛdayaṁ), T. b. ayasā (rewritten ?)pi, A ; lcags-las, T.

इतीह देवी पतिशोकमूर्छिता
रुरोद दध्यौ विललाप चासकृत्।
स्वभावधीरापि हि सा सती शुचा
धृतिं न सस्मार चकार नो ह्रियम्॥ ७० ॥

ततस्तथा शोकविलापविक्लवां यशोधरां प्रेक्ष्य वसुंधरागताम्।
महारविन्दैरिव वृष्टिताडितैर्मुखैः सबाष्पैर्वनिता विचुक्रुशुः ॥७१॥

समाप्तजाप्यः कृतहोममङ्गलो नृपस्तु देवायतनाद्विनिर्ययौ।
जनस्य तेनार्तरवेण चाहतश्चचाल वज्रध्वनिनेव वारणः॥ ७२ ॥

निशाम्य च छन्दककन्थकावुभौ
सुतस्य संश्रुत्य च निश्चयं स्थिरम्।
पपात शोकाभिहतो महीपतिः
शचीपतेर्वृत्त इवोत्सवे ध्वजः॥ ७३ ॥

ततो मुहूर्तं सुतशोकमोहितो
जनेन तुल्याभिजनेन धारितः।
निरीक्ष्य दृष्ट्या जलपूर्णया हयं
महीतलस्थो विललाप पार्थिवः॥ ७४ ।

बहूनि कृत्वा समरे प्रियाणि मे
महत्त्वया कन्थक विप्रियं कृतम्।
गुणप्रियो येन वने स मे प्रियः
प्रियोऽपि सन्नप्रियवत्प्रवेरितः॥ ७५ ॥

70. c. sucā, A.
71. cd. °tāḍitau mukhais m(?)abāṣpair, A.
72. c. jaṇasya, A. cd. cāhataḥ cacāla, A.
73. d. śacīpate vṛtta, A.
74. a. muhūrtta, A.

तदद्य मां वा नय तत्र यत्र स
व्रज द्रुतं वा पुनरेनमानय ।
ऋते हि तस्मान्मम नास्ति जीवितं
विगाढरोगस्य सदौषधादिव ॥ ७६ ॥

सुवर्णनिष्ठीविनि मृत्युना हृते
सुदुष्करं यन्न ममार संजयः ।
अहं पुनर्धर्मरतौ सुते गते
मुमुक्षुरात्मानमनात्मवानिव ॥ ७७ ॥

विभोर्दशक्षत्रकृतः प्रजापतेः
परापरज्ञस्य विवस्वदात्मनः ।
प्रियेण पुत्रेण सता विनाकृतं
कथं न मुह्येद्धि मनो मनोरपि ॥ ७८ ॥

अजस्य राज्ञस्तनयाय धीमते
नराधिपायेन्द्रसखाय मे स्पृहा ।
गते वनं यस्तनये दिवं गतो
न मोघबाष्पः कृपणं जिजीव ह ॥ ७९ ॥

76. b. vrajan drutaṁ, Luders. punar evam, A; der (for de ?) ni slar-yaṅ, T; 'do you take me quickly and go to him; if not (=or), go and come back with him', C; punar enaṁ, Bohtlingk. d. vigāḍharogamya sadoṣadhād, A.

77. a. kṛte, A; phrogs-par gyur-pa-na, T. b. sṛṁjayaḥ, Co. cd. gate 'mumukṣur, Co.; bdag-ñid thar-ḥdod, T; 'killing myself, will cause my body not to be', C.

78. d. yid mi-bde byas yid-kyi rmoṅs-pa gaṅ-las min (kṛtaṁ kathaṁ na muhyed vimano mano, omitting manor api), T.

79. a. rājñas punayāya, A; rgyal-po ajaḥi sras-po, T. d. kṛpanaṁ, A.

प्रचक्ष्व मे भद्र तदाश्रमाजिरं हृतस्त्वया यत्र स मे जलाञ्जलिः ।
इमे परीप्सन्ति हि तं पिपासवो ममासवः प्रेतगतिं यियासवः ॥८०॥

इति तनयवियोगजातदुःखः
क्षितिसदृशं सहजं विहाय धैर्यम् ।
दशरथ इव रामशोकवश्यो
बहु विललाप नृपो विसंज्ञकल्पः ॥ ८१ ॥

श्रुतविनयगुणान्वितस्ततस्तं
मतिसचिवः प्रवयाः पुरोहितश्च ।
समधृतमिदमूचतुर्यथाव-
न्न च परितप्तमुखौ न चाप्यशोकौ ॥ ८२ ॥

त्यज नरवर शोकमेहि धैर्यं
कुधृतिरिवार्हसि धीर नास्रु मोक्तुम् ।
स्रजमिव मृदितामपास्य लक्ष्मीं
भुवि बहवो नृपा वनान्यतीयुः ॥ ८३ ॥

अपि च नियत एष तस्य भावः
स्मर वचनं तदृषेः पुरासितस्य ।
न हि स दिवि न चक्रवर्तिराज्ये
क्षणमपि वासयितुं सुखेन शक्यः ॥ ८४ ॥

80. a. °ājira, A. c. parīpsanti hi ta, A ; de-la . . . yoṅs-ḥdod-de, T. d. pretagati, A.

81. a. °duḥkhaṁ, A ; sdug-bsṅal skyes-gyur-te, T. b. dhaiyaṁ, A. d. visajñakalpaḥ, A.

82. b. pravayā, A. c. First two syllables uncertain, A ; mñam-par bzhag, T ; ‘ without either slowness or urgency ’, C ; avadhṛta°, Co.

83. a. A omits vara ; mi-mchog, T. c. śrajam, A. lakṣmī, A.

यदि तु नृवर कार्य एव यत्नस्त्वरितमुदाहर यावदत्र यावः ।
बहुविधमिह युद्धमस्तु तावत्तव तनयस्य विधेश्च तस्य तस्य ॥ ८५ ॥
नरपतिरथ तौ शशास तस्माद्द्रुतमित एव युवामभिप्रयातम् ।
न हि मम हृदयं प्रयाति शान्तिं वनशकुनेरिव पुत्रलालसस्य ॥८६॥
परममिति नरेन्द्रशासनात्तौ
ययतुरमात्यपुरोहितौ वनं तत् ।
कृतमिति सवधूजनः सदारो
नृपतिरपि प्रचकार शेषकार्यम् ॥ ८७ ॥

इति बुद्धचरिते महाकाव्येऽन्तःपुरविलापो नामाष्टमः सर्गः

85. a. kārya esa, Speyer.

86. a. narapatir api, A ; de-nas . . . mi-bdag-gis, T. b. ṅes-par ḥdi-nas (dhruvam ita), T. c. prāyānti, A ; dgaḥ-bar rab-tu-soṅ (prayāti harṣaṁ ?), T.

87. c. savadhūjanasyadāro, A.

## CANTO IX

ततस्तदा मन्त्रिपुरोहितौ तौ बाष्पप्रतोदाभिहतौ नृपेण ।
विद्धौ सदश्वाविव सर्वयत्नात्सौहार्दशीघ्रं ययतुर्वनं तत् ॥ १ ॥
तमाश्रमं जातपरिश्रमौ तावुपेत्य काले सदृशानुयात्रौ ।
राजर्द्धिमुत्सृज्य विनीतचेष्टावुपेयतुर्भार्गवधिष्ण्यमेव ॥ २ ॥
तौ न्यायतस्तं प्रतिपूज्य विप्रं तेनार्चितौ तावपि चानुरूपम् ।
कृतासनौ भार्गवमासनस्थं छित्त्वा कथामूचतुरात्मकृत्यम् ॥ ३ ॥
शुद्धौजसः शुद्धविशालकीर्तेरिक्ष्वाकुवंशप्रभवस्य राज्ञः ।
इमं जनं वेत्तु भवानधीतं श्रुतग्रहे मन्त्रपरिग्रहे च ॥ ४ ॥
तस्येन्द्रकल्पस्य जयन्तकल्पः पुत्रो जरामृत्युभयं तितीर्षुः ।
इहाभ्युपेतः किल तस्य हेतोरावामुपेतौ भगवानवैतु ॥ ५ ॥
तौ सोऽब्रवीदस्ति स दीर्घबाहुः प्राप्तः कुमारो न तु नावबुद्धः ।
धर्मोऽयमावर्तक इत्यवेत्य यातस्त्वराडाभिमुखो मुमुक्षुः ॥ ६ ॥

1. a. manti°, A. b. nṛpena, A.

3. a. tshul bzhin (nyāyavat), T. vipra, A.

4. c. e.c.; adhīraṁ, A; nag-por (for bdag-por ?), T; adhīnaṁ, Kern. d. śruṣru(? sru ?)grahe, A; śruta rab-tu-ḥdzin, T.

5. c. kali, A; grags, T.

6. d. arājābhimukho, A; mṅon-par gdoṅ-phyogs ma-yin . . . skyen-par gśegs (yātas tvarānabhimukho), T; 'he has gone to Arāḍa', C.

तस्मात्ततस्तावुपलभ्य तत्त्वं तं विप्रमामन्त्र्य तदैव सद्यः ।
खिन्नावखिन्नाविव राजभक्त्या प्रससतुस्तेन यतः स यातः ॥ ७ ॥

यान्तौ ततस्तौ मृजया विहीनमपश्यतां तं वपुषोज्ज्वलन्तम् ।
उपोपविष्टं पथि वृक्षमूले सूर्यं घनाभोगमिव प्रविष्टम् ॥ ८ ॥

यानं विहायोपययौ ततस्तं पुरोहितो मन्त्रधरेण सार्धम् ।
यथा वनस्थं सहवामदेवो रामं दिदृक्षुर्मुनिरौर्वशेयः ॥ ९ ॥

तावर्चयामासतुरर्हतस्तं दिवीव शुक्राङ्गिरसौ महेन्द्रम् ।
प्रत्यर्चयामास स चार्हतस्तौ दिवीव शुक्राङ्गिरसौ महेन्द्रः ॥ १० ॥

कृताभ्यनुज्ञावभितस्ततस्तौ निषेदतुः शाक्यकुलध्वजस्य ।
विरेजतुस्तस्य च संनिकर्षे पुनर्वसू योगगताविवेन्दोः ॥ ११ ॥

तं वृक्षमूलस्थमभिज्वलन्तं पुरोहितो राजसुतं बभाषे ।
यथोपविष्टं दिवि पारिजाते बृहस्पतिः शक्रसुतं जयन्तम् ॥ १२ ॥

त्वच्छोकशल्ये हृदयावगाढे मोहं गतो भूमितले मुहूर्तम् ।
कुमार राजा नयनाम्बुवर्षो यत्त्वामवोचत्तदिदं निबोध ॥ १३ ॥

7. b. āmatryaṁ, A. c. iva rājabha (gap for missing letter), A ; rgyal-po-la gus-pas, T. d. yattaḥ sa yātaḥ, A.

8. b. vapuṣā jvalantaṁ, A ; sku-lus rab-tu-ḥbar-ba, T. c. e.c. Windisch ; nrpopaviṣṭaṁ, A ; ñe-bar-zhugs-pa, T. d. sūrya, A.

9. a. °opaye(corrected to ya)yo, A. d. aurvaseyaḥ, A.

10. b. śukrāṁgirisau, A. d. dīvīva śukrāṁgirisau, A.

11. a. kṛtābhyanujñav abhita tatas, A. b. niṣīdatuḥ, A.

12. a. ta vṛkṣa°, A. b. rājasuta, A. c. pārajātau, A ; yoṅs-ḥdus-dag, la, T.

13. b. rmoṅs-śiṅ brgyal-bar gyur-pa-ste (mohaṁ gato . . . . mumūrcho ?)-T ; 'bewildered and distracted, he lay on the dirty ground', C.

जानामि धर्मं प्रति निश्चयं ते परैमि ते भाविनमेतमर्थम् ।
अहं त्वकाले वनसंश्रयात्ते शोकाग्निनाग्निप्रतिमेन दह्ये ॥ १४ ॥
तदेहि धर्मप्रिय मत्प्रियार्थं धर्मार्थमेव त्यज बुद्धिमेताम् ।
अयं हि मा शोकरयः प्रवृद्धो नदीरयः कूलमिवाभिहन्ति ॥ १५ ॥
मेघाम्बुकक्षाद्रिषु या हि वृत्तिः समीरणार्काग्निमहाशनीनाम् ।
तां वृत्तिमस्मासु करोति शोको विकर्षणोच्छोषणदाहभेदैः ॥१६॥
तद्भुङ्क्ष्व तावद्वसुधाधिपत्यं काले वनं यास्यसि शास्त्रदृष्टे ।
अनिष्टबन्धौ कुरु मय्यपेक्षां सर्वेषु भूतेषु दया हि धर्मः ॥ १७ ॥
न चैष धर्मो वन एव सिद्धः पुरेऽपि सिद्धिर्नियता यतीनाम् ।
बुद्धिश्च यत्नश्च निमित्तमत्र वनं च लिङ्गं च हि भीरुचिह्नम् ॥१८॥
मौलीधरैरंसविषक्तहारैः केयूरविष्टब्धभुजैर्नरेन्द्रैः ।
लक्ष्म्यङ्कमध्ये परिवर्तमानैः प्राप्तो गृहस्थैरपि मोक्षधर्मः ॥ १९ ॥
ध्रुवानुजौ यौ बलिवज्रबाहू वैभ्राजमाषाढमथान्तिदेवम् ।
विदेहराजं जनकं तथैव * * द्रुमं सेनजितश्च राज्ञः ॥ २० ॥

14. b. te vāvinam etam, A; khyod-kyi ḥbyun-baḥi ḥgyur-baḥi don, T (omitting etam).

16. abc. only partially legible in A from vṛttiḥ to karoti; Co.'s text agrees with T.

17. ab. °patya kāme, A; dus-su, T. c. aniṣṭabandho kuru mapy apye-(? pyā ?)kṣāṁ, A; mi-ḥdod gñen-ḥdun kho-bo-la ni ltos-par mdzod, T. d. Illegible in A; Co.'s text agrees with T.

18. d. liṅga, A.

19. a. aṁśaviśaktahāraiḥ, A. c. phun-tshogs yan-lag dbus-na (lakṣmyaṅgamadhye), T. d. thar-paḥi lam (mokṣamārgaḥ), T.

20. For C and FP see notes in translation. a. dhruvājau (one syllable short), A; brtan-paḥi nu-bo, T. vadr(?)abāhū, A; rdo-rjeḥi lag-pa, T. d. yāṅge(?gi?)druma, A; ḥgro daṅ ljon-śiṅ can (. . . drumaṁ), T.

एतान् गृहस्थान्नृपतीनवेहि नैःश्रेयसे धर्मविधौ विनीतान् ।
उभौऽपि तस्माद्युगपद्भजस्व वित्ताधिपत्यं च नृपश्रियं च ॥ २१ ॥
इच्छामि हि त्वामुपगुह्य गाढं कृताभिषेकं सलिलार्द्रमेव ।
धृतातपत्रं समुदीक्षमाणस्तेनैव हर्षेण वनं प्रवेष्टुम् ॥ २२ ॥
इत्यब्रवीद्भूमिपतिर्भवन्तं वाक्येन बाष्पग्रथिताक्षरेण ।
श्रुत्वा भवानर्हति तत्प्रियार्थं स्नेहेन तत्स्नेहमनुप्रयातुम् ॥ २३ ॥
शोकाम्भसि त्वत्प्रभवे ह्यगाधे
दुःखार्णवे मज्जति शाक्यराजः ।
तस्मात्तमुत्तारय नाथहीनं
निराश्रयं मग्नमिवार्णवे नौः ॥ २४ ॥
भीष्मेण गङ्गोदरसंभवेन रामेण रामेण च भार्गवेण ।
श्रुत्वा कृतं कर्म पितुः प्रियार्थं पितुस्त्वमप्यर्हसि कर्तुमिष्टम् ॥२५॥
संवर्धयित्रीं समवेहि देवीमगस्त्यजुष्टां दिशमप्रयाताम् ।
प्रनष्टवत्सामिव वत्सलां गामजस्रमार्तां करुणं रुदन्तीम् ॥ २६ ॥
हंसेन हंसीमिव विप्रयुक्तां त्यक्तां गजेनेव वने करेणुम् ।
आर्तां सनाथामपि नाथहीनां त्रातुं वधूमर्हसि दर्शनेन ॥ २७ ॥

21. a. gṛhasthā nṛ°, A. c. ubho pi tasmāt yugapat bhajasva, A. d. cittādhipatyaṁ, Co.

23. a. bhūmipati bhavantam, A.

24. a. tvaṁ(?)prabhavai(?), A. c. T separates nātha hīnaṁ; ' without a saviour, with nothing to rely on ', C. d. ivārṇṇave gauḥ, A; gru bzhin-du, T; ' you should be the captain of the ship ', C.

25. a. gaṅgodac(?r?)abh(?nd?)āṁbhavena, A; chu-bo gaṅgāḥi lto-nas byuṅ-ba, T. c. pitu, A.

26. a. ca samehi, A; mkhyen-par mdzod, T. d. ārttāṁ ka (rest torn out), A; ñam-thag sñiṅ-rjer ṅu-ba-mo, T.

27. a. First two syllables torn out in A; ṅaṅ-pa, T. b. vaṇe (marked above to show error) karenuṁ(?)ḥ, A.

एकं सुतं बालमनर्हदुःखं संतापमन्तर्गतमुद्वहन्तम् ।
तं राहुलं मोक्षय बन्धुशोकाद्राहूपसर्गादिव पूर्णचन्द्रम् ॥ २८ ॥
शोकाग्निना त्वद्विरहेन्धनेन निःश्वासधूमेन तमःशिखेन ।
त्वद्दर्शनाम्बिच्छति दह्यमानमन्तःपुरं चैव पुरं च कृत्स्नम् ॥ २९ ॥
स बोधिसत्त्वः परिपूर्णसत्त्वः श्रुत्वा वचस्तस्य पुरोहितस्य ।
ध्यात्वा मुहूर्तं गुणवद्गुणज्ञः प्रत्युत्तरं प्रश्रितमित्युवाच ॥ ३० ॥

अवैमि भावं तनये पितॄणां
विशेषतो यो मयि भूमिपस्य ।
जानन्नपि व्याधिजराविपद्भ्यो
भीतस्त्वगत्या स्वजनं त्यजामि ॥ ३१ ॥

द्रष्टुं प्रियं कः स्वजनं हि नेच्छेन्नान्ते यदि स्यात्प्रियविप्रयोगः ।
यदा तु भूत्वापि चिरं वियोगस्ततो गुरुं स्निग्धमपि त्यजामि ॥३२॥
मद्धेतुकं यत्तु नराधिपस्य शोकं भवानाह न तत्प्रियं मे ।
यत्स्वप्नभूतेषु समागमेषु संतप्यते भाविनि विप्रयोगे ॥ ३३ ॥

28. bc. saṁtāpas(?m?)antaḥ (tear covering seven syllables) rāhulam, A; kun-nas gduṅ-ba mthar-gyur-pa ni ḥdren-pa-ste . . . sgra-gcan ḥdzin de (=text, but antagatam for antar°), T.

29. cd. tvaddarśśanā (tear covering one syllable)cchati dahyamā (tear covering three syllables) puraṁ, A; pho-braṅ-btsun-moḥi ḥkhor. . . tshig-pa dag ni khyed-la lta-baḥi chu ḥdod-do, T. d. kṛsnaṁ, A.

30. c. yon-tan-ldan-zhiṅ yon-tan śes-pas (guṇavāṅ guṇajñaḥ), T; 'answered properly and modestly', C.

31. a. tanayaṁ (tear covering three syllables), A; pha-rnams-kyi ni bu-la, T. b. mapi bhūmipaśya, A. c. °jarāvidbhyo (one syllable short), A; rga daṅ rgud-pa-las, T. d. ḥjigs-te nags-su phyin-nas (=bhīto vanaṁ gatvā), T.

32. b. nāsti yadi syāt, A; mthar ni gal-te . . . yin-na, T. c. bhutvāpa (?pi?, then tear covering three syllables) yogas, A; yuṅ-riṅ gyur kyaṅ rnam-par-ḥbral-ba-ste (bhūto 'pi ciraṁ viyogas ?), T. d. guru, A.

33. b. bhavān āha na priyaṁ (one syllable short), A; khyod-kyis smras des bdag-la dgaḥ-ba med, T.

एवं च ते निश्चयमेतु बुद्धिर्दृष्ट्वा विचित्रं जगतः प्रचारम् ।
संतापहेतुर्न सुतो न बन्धुरज्ञाननैमित्तिक एष तापः ॥ ३४ ॥
यथाध्वगानामिह संगतानां काले वियोगो नियतः प्रजानाम् ।
प्राज्ञो जनः को नु भजेत शोकं बन्धुप्रतिज्ञातजनैर्विहीनः ॥ ३५ ॥
इहैति हित्वा स्वजनं परत्र प्रलभ्य चेहापि पुनः प्रयाति ।
गत्वापि तत्राप्यपरत्र गच्छत्येवं जने त्यागिनि कोऽनुरोधः ॥ ३६ ॥
यदा च गर्भात्प्रभृति प्रवृत्तः सर्वास्ववस्थासु वधाय मृत्युः ।
कस्मादकाले वनसंश्रयं मे पुत्रप्रियस्तत्रभवानवोचत् ॥ ३७ ॥
भवत्यकालो विषयाभिपत्तौ कालस्तथैवार्थविधौ प्रदिष्टः ।
कालो जगत्कर्षति सर्वकालान्निर्वाहके श्रेयसि नास्ति कालः ॥३८॥
राज्यं मुमुक्षुर्मयि यच्च राजा तदप्युदारं सदृशं पितुश्च ।
प्रतिग्रहीतुं मम न क्षमं तु लोभादपथ्यान्नमिवातुरस्य ॥ ३९ ॥

34. b. vici(tear covering three syllables)taḥ pracāraṁ, A; ḥgro-baḥi spyod-pa rnam-pa-sna-tshogs, T. c. °hetu na suto na bundhur, A. d. ḥchiṅ-ba de... mtshan-ma-ñid (°naimittika esa bandhah ?), T; 'that which produces the grief of separation', C; eva tāpaḥ, Gawroński.

35. a. yadādhvagānām iva, A; lam-du ḥgro-rnams hdir ni... ji-lta-baḥi, T. c. bhajetya (t added later to original ya), A. d. bandhu (tear covering seven syllables) hīnaḥ, A; gñen-ḥdun dam-ḥchaḥ skye-bos rnam-par-dman-pa-yi, T.

36. cd. gatvāpi tarāpy aparatra gacchety evaṁ jano yogini, A; der soṅ-nas kyaṅ pha-rol gzhan-du ḥgro-ḥgyur-la de ltar ḥdor-ldan skye-la (=text, omitting one api), T.

37. ab. °prabhṛti pra (tear covering seven syllables) su vadhāya, A; gnas-skabs thams-cad-du ... rab-tu-gnas-pa-ste, T. c. akālaṁ, Cappeller; T ambiguous.

38. b. A omits la; de-bzhin nor-gyi cho-gar zhugs dus yin-no (kālas tathāsty arthavidhau praviṣṭaḥ ?), T. d. arcc(?vv?)āhake śreyasi sarvva-kālaḥ; A; dge-legs ṅes-par-thob-pa dus yod-ma-yin-no, T; 'in the *dharma* that takes away death there is no time', C.

39. a. yac ca rāgha, A; gaṅ yaṅ rgyal-po, T.

कथं नु मोहायतनं नृपत्वं क्षमं प्रपत्तुं विदुषा नरेण ।
सोद्वेगता यत्र मदः श्रमश्च परापचारेण च धर्मपीडा ॥ ४० ॥

जाम्बूनदं हर्म्यमिव प्रदीप्तं विषेण संयुक्तमिवोत्तमान्नम् ।
ग्राहाकुलं चाम्बिव सारविन्दं राज्यं हि रम्यं व्यसनाश्रयं च ॥४१॥

इत्थं च राज्यं न सुखं न धर्मः पूर्वं यथा जातघृणा नरेन्द्राः ।
वयःप्रकर्षेऽपरिहार्यदुःखे राज्यानि मुक्त्वा वनमेव जग्मुः ॥ ४२ ॥

वरं हि भुक्तानि तृणान्यरण्ये तोषं परं रत्नमिवोपगुह्य ।
सहोषितं श्रीसुलभैर्न चैव दोषैरदृश्यैरिव कृष्णसर्पैः ॥ ४३ ॥

श्लाघ्यं हि राज्यानि विहाय राज्ञां धर्माभिलाषेण वनं प्रवेष्टुम् ।
भग्नप्रतिज्ञस्य न तूपपन्नं वनं परित्यज्य गृहं प्रवेष्टुम् ॥ ४४ ॥

जातः कुले को हि नरः ससत्त्वो धर्माभिलाषेण वनं प्रविष्टः ।
काषायमुत्सृज्य विमुक्तलज्जः पुरन्दरस्यापि पुरं श्रयेत ॥ ४५ ॥

लोभाद्धि मोहादथवा भयेन यो वान्तमन्नं पुनराददीत ।
लोभात्स मोहादथवा भयेन संत्यज्य कामान् पुनराददीत ॥४६॥

40. a. nṛpe(?a?)tvaṁ, A.

41. ab. pradīpta vise saṁyuktam (one syllable short), A. c. ca sthiv-(?r?)a s(?m?)ārabindaṁ, A; padma-daṅ-bcas chu lta-bu, T. d. rgyal-srid daṅ ni gser-dag (rājyaṁ hiraṇyam ?), T; raṁmyaṁ, A; 'kingship is very pleasant', FP.

42. a. dharmma, A. b. tathā, A; ji-ltar, T. c. A reads avagraha and T omits it. d. rgyal-srid ṅes-par-dor-nas (rājyaṁ nimuktvā !), T.

43. b. toṣaṁ ka(corrected to va, dha or ga)rau ratnam, A; rin-chen bzhin-du tshim-pa mchog, T.

44. a. rāṣṭ(corrected to jñ)āṁ, A. b. vaṇaṁ, A. cd. e.c. Gawroński; nanūyapannaṁ vana, A; ḥthad-pa ma-yin-no (nāsty upapannam ?), T.

45. b. vaṇaṁ, A.

46. a. sred daṅ rnam-par-rmoṅs (lobhād vimohād), T. d. satyajya, A.

यश्च प्रदीप्ताच्छरणात्कथंचिन्निष्क्रम्य भूयः प्रविशेत्तदेव ।
गार्हस्थ्यमुत्सृज्य स दृष्टदोषो मोहेन भूयोऽभिलषेद्ग्रहीतुम् ॥ ४७ ॥
या च श्रुतिर्मोक्षमवाप्तवन्तो नृपा गृहस्था इति नैतदस्ति ।
शमप्रधानः क्व च मोक्षधर्मो दण्डप्रधानः क्व च राजधर्मः ॥ ४८ ॥

शमे रतिश्चेच्छिथिलं च राज्यं
राज्ये मतिश्चेच्छमविप्लवश्च ।
शमश्च तैक्ष्ण्यं च हि नोपपन्नं
शीतोष्णयोरैक्यमिवोदकाग्न्योः ॥ ४९ ॥

तन्निश्चयाद्वा वसुधाधिपास्ते राज्यानि मुक्त्वा शममाप्तवन्तः ।
राज्याङ्गिता वा निभृतेन्द्रियत्वादनैष्ठिके मोक्षकृताभिमानाः ॥ ५० ॥
तेषां च राज्येऽस्तु शमो यथावत्प्राप्तो वनं नाहमनिश्चयेन ।
छित्त्वा हि पाशं गृहबन्धुसंज्ञं मुक्तः पुनर्न प्रविविक्षुरस्मि ॥ ५१ ॥
इत्यात्मविज्ञानगुणानुरूपं मुक्तस्पृहं हेतुमदूर्जितं च ।
श्रुत्वा नरेन्द्रात्मजमुक्तवन्तं प्रत्युत्तरं मन्त्रधरोऽप्युवाच ॥ ५२ ॥

47. c. gārhastham, A. A adds after this verse, T after verse 49, the following spurious verse, which is not in C :—

*Vahneś ca toyasya ca nāsti saṁdhiḥ*
*śaṭhasya satyasya ca nāsti saṁdhiḥ* |
*Āryasya pāpasya ca nāsti saṁdhiḥ*
*śamasya daṇḍasya ca nāsti saṁdhiḥ* ||

A reads śāmasya in d.

49. b. chamaviśiplavaś ca (mark against śi to cut it out), A. c. samaś ca, A.

50. b. samav āptavantaḥ, A ; zhi-ba thob-pa-can, T. c. e.c. ; rājyādmitā, A ; rgyal-srid-dag-la sñen-nas (=rajyāny āśritya, or rājyāśrayād), T. d. °kṛtābhidhānāḥ, A ; mṅon-paḥi ṅa-rgyal byas (so Peking edition), T.

51. b. vana moham (corrected in same hand to vanan nāham), A ; bdag ni nags-tshal (=text omitting na), T. c. °saṁjña, A.

52. c. uktavantas, A.

यो निश्चयो धर्मविधौ तवायं
नायं न युक्तो न तु कालयुक्तः ।
शोकाय दत्त्वा पितरं वयःस्थं
स्याद्धर्मकामस्य हि ते न धर्मः ॥ ५३ ॥

नूनं च बुद्धिस्तव नातिसूक्ष्मा धर्मार्थकामेष्वविचक्षणा वा ।
हेतोरदृष्टस्य फलस्य यस्त्वं प्रत्यक्षमर्थं परिभूय यासि ॥ ५४ ॥

पुनर्भवोऽस्तीति च केचिदाहुर्नास्तीति केचिन्नियतप्रतिज्ञाः ।
एवं यदा संशयितोऽयमर्थस्तस्मात्क्षमं भोक्तुमुपस्थिता श्रीः ॥ ५५ ॥

भूयः प्रवृत्तिर्यदि काचिदस्ति रंस्यामहे तत्र यथोपपत्तौ ।
अथ प्रवृत्तिः परतो न काचित्सिद्धोऽप्रयत्नाज्जगतोऽस्य मोक्षः ॥५६॥

अस्तीति केचित्परलोकमाहुर्मोक्षस्य योगं न तु वर्णयन्ति ।
अग्नेर्यथा ह्यौष्ण्यमपां द्रवत्वं तद्वत्प्रवृत्तौ प्रकृतिं वदन्ति ॥ ५७ ॥

केचित्स्वभावादिति वर्णयन्ति शुभाशुभं चैव भवाभवौ च ।
स्वाभाविकं सर्वमिदं च यस्मादतोऽपि मोघो भवति प्रयत्नः ॥ ५८ ॥

यदिन्द्रियाणां नियतः प्रचारः प्रियाप्रियत्वं विषयेषु चैव ।
संयुज्यते यज्जरयार्तिभिश्च कस्तत्र यत्नो ननु स स्वभावः ॥ ५९ ॥

53. a. mantradharo tavāyaṁ, A ; chos-kyi cho-gar (so Peking edition cho-gas Weller) . . . khyod-kyi ḥdi, T. b. T omits na tu (but read min for yin ?).

54. a. buddhiḥ tava nātiśūkṣmā, A. cd. yas tva pratyakṣam artha, A,

55. a. kecid āhuḥ, A. b. °pratijñaḥ, A. c. śaṁsayito, A.

56. b. rasyāmahe, A. yathopapatti, Böhtlingk.

57. c. hy oṣṇām apā, A. d. prakṛttim vadanti, A ; pravṛttiṁ prakṛter, Gawroński.

अद्भिर्हुताशः शममभ्युपैति तेजांसि चापो गमयन्ति शोषम् ।
भिन्नानि भूतानि शरीरसंस्थान्यैक्यं च गत्वा जगदुद्वहन्ति ॥६०॥
यत्पाणिपादोदरपृष्ठमूर्ध्नां निर्वर्तते गर्भगतस्य भावः ।
यदात्मनस्तस्य च तेन योगः स्वाभाविकं तत्कथयन्ति तज्ज्ञाः ॥६१॥
कः कण्टकस्य प्रकरोति तैक्ष्ण्यं विचित्रभावं मृगपक्षिणां वा ।
स्वभावतः सर्वमिदं प्रवृत्तं न कामकारोऽस्ति कुतः प्रयत्नः ॥ ६२ ॥
सर्गं वदन्तीश्वरतस्तथान्ये तत्र प्रयत्ने पुरुषस्य कोऽर्थः ।
य एव हेतुर्जगतः प्रवृत्तौ हेतुर्निवृत्तौ नियतः स एव ॥ ६३ ॥
केचिद्वदन्त्यात्मनिमित्तमेव प्रादुर्भवं चैव भवक्षयं च ।
प्रादुर्भवं तु प्रवदन्त्ययत्नाद्यत्नेन मोक्षाधिगमं ब्रुवन्ति ॥ ६४ ॥

नरः पितॄणामनृणः प्रजाभि-
र्वेदैर्ऋषीणां क्रतुभिः सुराणाम् ।
उत्पद्यते सार्धमृणैस्त्रिभिस्त-
र्यस्यास्ति मोक्षः किल तस्य मोक्षः ॥ ६५

60. b. tejāśi, A. e.c. Cowell; śamayanti, A; skems-par byed-pa-ste (=śosayanti), T; 'fire makes water dry up', C. c. śarīrasasthāny, A. d. e.c. Gawroński; aikyañ ca datvā, A; gcig-ñid gyur-nas (=aikyaṁ bhūtvā), T; 'by their natures uniting, they make all creatures', C.

61. a. °mūrddhnā, A and Co.; mgo-rnams-kyi (=°mūrdhnāṁ, Weller amends to kyis=°mūrdhnā), T.

62. c. pravṛtta, A.

63. b. rab-tu-ḥjug-pa-la (pravṛttau), T; 'what room is there then for effort?', C.

64. b. ceva, A.

65. a. prajābhiḥ, A. b. surāṇā, A. d. yaktāsyāsti (ktā cut out by mark), A.

इत्येवमेतेन विधिक्रमेण मोक्षं सयत्नस्य वदन्ति तज्ज्ञाः ।
प्रयत्नवन्तोऽपि हि विक्रमेण मुमुक्षवः खेदमवाप्नुवन्ति ॥ ६६ ॥

तत्सौम्य मोक्षे यदि भक्तिरस्ति न्यायेन सेवस्व विधिं यथोक्तम् ।
एवं भविष्यत्युपपत्तिरस्य संतापनाशश्च नराधिपस्य ॥ ६७ ॥

या च प्रवृत्ता तव दोषबुद्धि-
स्तपोवनेभ्यो भवनं प्रवेष्टुम् ।
तत्रापि चिन्ता तव तात मा भूत्
पूर्वेऽपि जग्मुः स्वगृहान्वनेभ्यः ॥ ६८ ॥

तपोवनस्थोऽपि वृतः प्रजाभिर्जगाम राजा पुरमम्बरीषः ।
तथा महीं विप्रकृतामनार्यैस्तपोवनादेत्य ररक्ष रामः ॥ ६९ ॥

तथैव शाल्वाधिपतिर्द्रुमाख्यो वनात्ससूनुर्नगरं विवेश ।
ब्रह्मर्षिभूतश्च मुनेर्वसिष्ठाद्दध्रे श्रियं सांकृतिरन्तिदेवः ॥ ७० ॥

एवंविधा धर्मयशःप्रदीप्ता वनानि हित्वा भवनान्यतीयुः ।
तस्मान्न दोषोऽस्ति गृहं प्रयातुं तपोवनाद्धर्मनिमित्तमेव ॥ ७१

66. c. prayatnavanto 'nyavidhikramena, Speyer.

67. d. saṁtāpanāsaś, A.

68. a. bhava doṣa°, A; khyod-kyi skyon-gyi, T. d. svagṛhān (rubbed and barely legible) vanebhyaḥ, A; raṅ-gi khaṅ-par (svagṛhaṁ ?), T.

69. b. zhugs-gyur-la (viveśa), T. c. mahī, A.

70. a. sālvādhipati drumākṣe, A; do-ba dan bcas bdag-poḥi ljon-śiṅ miṅ, T; 'the king of the Śālva country called Druma', C. b. sasunur gg(?)ag(?)ara viveśa (much rubbed), A; bu daṅ bcas-pa groṅ-du zhugs-pa-ste, T. d. sbyin-sreg daṅ bcas mthaḥ-can lha-yis (sāhutir antidevaḥ), T.

71. a. chos daṅ grags-par rab-zhugs-pa (dharmayaśaḥpraviṣṭā, or °pravṛttā), T; °pradīpā, Gawroński. b. bhavanāny an(?t?)tīyuḥ, A; khaṅ-khyim-rnams-su soṅ-ba-ste, T.

ततो वचस्तस्य निशम्य मन्त्रिणः
प्रियं हितं चैव नृपस्य चक्षुषः ।
अनूनमव्यस्तमसक्तमद्रुतं
धृतौ स्थितो राजसुतोऽब्रवीद्वचः ॥ ७२ ॥

इहास्ति नास्तीति य एष संशयः
परस्य वाक्यैर्न ममात्र निश्चयः ।
अवेत्य तत्त्वं तपसा शमेन च
स्वयं ग्रहीष्यामि यदत्र निश्चितम् ॥ ७३ ॥

न मे क्षमं संशयजं हि दर्शनं ग्रहीतुमव्यक्तपरस्पराहतम् ।
बुधः परप्रत्ययतो हि को व्रजेज्जनोऽन्धकारेऽन्ध इवान्धदेशिकः ॥७४॥

अदृष्टतत्त्वस्य सतोऽपि किं तु मे
शुभाशुभे संशयिते शुभे मतिः ।
वृथापि खेदो हि वरं शुभात्मनः
सुखं न तत्त्वेऽपि विगर्हितात्मनः ॥ ७५ ॥

**72.** b. byas-paḥi (cakruṣaḥ for caksusah), T. c. abhūnam, A; dman-min, T. aśaktam, A; chags-min, T. d. brtan daṅ gnas-pa-la (dhṛtaṁ sthitaṁ ?), T; 'words that were . . . resolute and peaceful' (dhṛtaṁ sthiraṁ ?), C.

**73.** c. śamena vā, A; daṅ ni zhi-bas, T.

**74.** a. kṣamaṁ saśataṁ hi (one syllable short), A; the-tshom skye-ba-yi lta-ba . . . nus, T. b. °paramparā°, A; phan-tshun gnod-cin mi-gsal, T; 'handed down over and over again (or, interchangeably)', C. c. buddhaḥ, A; mkhas-paḥi, T. parapratyayate, A.

**75.** b. sanśayite śu(gap for one character) matiḥ, A; the-tshom-na dge blo-gros gyur, T. c. e.c. Lüders; vṛthāpi khedo pi, A; ḥbras-bu-med byid(?, Weller reads byir and amends to byiṅ, Peking edition has phyir)-la yaṅ (=vṛthā khede'pi ?), T; 'it is better to follow the *dharma* of *śubha* by *tapas* than to take pleasure in the practice of *aśubha*', C.

इमं तु दृष्टागममव्यवस्थितं यदुक्तमाप्तैस्तदवेहि साध्विति ।
प्रहीणदोषत्वमवेहि चाप्ततां प्रहीणदोषो ह्यनृतं न वक्ष्यति ॥७६॥
गृहप्रवेशं प्रति यच्च मे भवानुवाच रामप्रभृतीन्निदर्शनम् ।
न ते प्रमाणं न हि धर्मनिश्चयेष्वलं प्रमाणाय परिक्षतव्रताः ॥७७॥

तदेवमप्येव रविर्महीं पते-
दपि स्थिरत्वं हिमवान् गिरिस्त्यजेत् ।
अदृष्टतत्त्वो विषयोन्मुखेन्द्रियः
श्रयेय न त्वेव गृहान् पृथग्जनः ॥ ७८ ॥
अहं विशेयं ज्वलितं हुताशनं
न चाकृतार्थः प्रविशेयमालयम् ।
इति प्रतिज्ञां स चकार गर्वितो
यथेष्टमुत्थाय च निर्ममो ययौ ॥ ७९ ॥

ततः सबाष्पौ सचिवद्विजावुभौ निशम्य तस्य स्थिरमेव निश्चयम् ।
विषण्णवक्त्रावनुगम्य दुःखितौ शनैरगत्या पुरमेव जग्मतुः ॥ ८० ॥

तत्स्नेहादथ नृपतेश्च भक्तितस्तौ
सापेक्षं प्रतिययतुश्च तस्थतुश्च ।
दुर्धर्षं रविमिव दीप्तमात्मभासा
तं द्रष्टुं न हि पथि शेकतुर्न मोक्तुम् ॥ ८१ ॥

76. b. avaihi, A. d. vaksati, A.
77. c. pramāṇa, A. b. dper bstan-te (nidarśayan ?), T.
78. c. viṣayomukhe°, A ; yul-la kha-bltas dbaṅ-po, T.
79. cd. garvvitā yathaiṣṭam, A.
80. d. dal-bus soṅ-nas (=śanair gatvā, for śanair āgatya ?), T.
81. c. durddhaṣaṁ, A ; blta-bar dkaḥ-ba (durdarśam), T. d. draṣṭu, A. pathi śekar na (one syllable short), A.

तौ ज्ञातुं परमगतेर्गतिं तु तस्य
प्रच्छन्नांश्चरपुरुषाञ्छुचीन्विधाय ।
राजानं प्रियसुतलालसं नु गत्वा
द्रक्ष्यावः कथमिति जग्मतुः कथंचित् ॥ ८२ ॥

इति बुद्धचरिते महाकाव्ये कुमारान्वेषणो नाम नवमः सर्गः ॥ ९ ॥

## CANTO X

स राजवत्सः पृथुपीनवक्षास्तौ हव्यमन्त्राधिकृतौ विहाय ।
उत्तीर्य गङ्गां प्रचलत्तरङ्गां श्रीमद्गृहं राजगृहं जगाम ॥ १ ॥
शैलैः सुगुप्तं च विभूषितं च धृतं च पूतं च शिवैस्तपोदैः ।
पञ्चाचलाङ्कं नगरं प्रपेदे शान्तः स्वयंभूरिव नाकपृष्ठम् ॥ २ ॥
गाम्भीर्यमोजश्च निशाम्य तस्य वपुश्च दीप्तं पुरुषानतीत्य ।
विसिस्मिये तत्र जनस्तदानीं स्थाणुव्रतस्येव वृषध्वजस्य ॥ ३ ॥
तं प्रेक्ष्य योऽन्येन ययौ स तस्थौ
यस्तत्र तस्थौ पथि सोऽन्वगच्छत् ।
द्रुतं ययौ यः स जगाम धीरं
यः कश्चिदास्ते स्म स चोत्पपात ॥ ४ ॥
कश्चित्तमानर्च जनः कराभ्यां सत्कृत्य कश्चिच्छिरसा ववन्दे ।
स्निग्धेन कश्चिद्वचसाभ्यनन्दन्नैनं जगामाप्रतिपूज्य कश्चित् ॥ ५ ॥

1. a. °vakṣyās, A. d. dpal daṅ ldan-paḥi rgyal-poḥi khyab-tu (=śrīmad rājagṛhaṁ, read dpal-ldan khaṅ-paḥi ?), T.

2. b. pūtaṁ va śivais, A. d. zhi-bar raṅ-byuṅ tshaṅs-pa (śāntaṁ svayaṁbhūr ?), T.

3. c. viśismiye, A. d. sthānuvratasyaiva, A ; de-yi brtul-zhugs brtan-pa bzhin (sthāṇuvrato 'syeva ?), T ; Co. as in text.

4. a. yo nyena yayo, A ; gzhan gaṅ ma soṅ (yo 'nyo na yayau), T. b. yaś cātra tasthau pathi yo nvagacchat, A ; der ni gaṅ-zhig lam-na gnas de rjes-ḥgro-zhiṅ, T.

5. a. kaści tam, A. d. naivaṁ, A ; kha-cig de-la rab-tu-mchod-nas soṅ-bar-gyur (=enaṁ jagāma pratipūjya kaścit), T. kaści, A.

तं जिह्रियुः प्रेक्ष्य विचित्रवेषाः प्रकीर्णवाचः पथि मौनमीयुः ।
धर्मस्य साक्षादिव संनिकर्षे न कश्चिदन्यायमतिर्बभूव ॥ ६ ॥

अन्यक्रियाणामपि राजमार्गे स्त्रीणां नृणां वा बहुमानपूर्वम् ।
तं देवकल्पं नरदेवसूनुं निरीक्षमाणा न ततर्प दृष्टिः ॥ ७ ॥

भ्रुवौ ललाटं मुखमीक्षणे वा वपुः करौ वा चरणौ गतिं वा ।
यदेव यस्तस्य ददर्श तत्र तदेव तस्याथ बबन्ध चक्षुः ॥ ८ ॥

दृष्ट्वा च सोर्णभ्रुवमायताक्षं ज्वलच्छरीरं शुभजालहस्तम् ।
तं भिक्षुवेषं क्षितिपालनार्हं संचुक्षुभे राजगृहस्य लक्ष्मीः ॥ ९ ॥

श्रेण्योऽथ भर्ता मगधाजिरस्य बाह्याद्विमानाद्विपुलं जनौघम् ।
ददर्श पप्रच्छ च तस्य हेतुं ततस्तमस्मै पुरुषः शशंस ॥ १० ॥

ज्ञानं परं वा पृथिवीश्रियं वा विप्रैर्य उक्तोऽधिगमिष्यतीति ।
स एष शाक्याधिपतेस्तनूजो निरीक्ष्यते प्रव्रजितो जनेन ॥ ११ ॥

6. a. °veśāḥ, A. b. maum īyuḥ (one syllable short), A ; smra-ba med-par soṅ, T. d. nna kaścid, A.

7. a. °kriyānām, A. c. e.c. Kielhorn and Kern ; ta devakalpaṁ naradevasūtraṁ, A ; lha daṅ mtshuṅs-paḥi mi-dbaṅ sras-po (=taṁ devakalpaṁ narendrasūnuṁ), T. d. na tarppa(?rmpa, ?rmya) dṛstiḥ (one syllable short), A ; mthoṅ-nas . . . mig daṅ (? read dag ?) ṅom-par ma-gyur-to (=nirīkṣya na tatarpa dṛṣṭiḥ), T.

8. a. bhruvo, A. d. T omits atha.

9. a. e.c. ; dṛṣṭā svarṇṇabhruvam (one syllable short), A ; smin-ma mdzod-spu daṅ bcas mthoṅ-nas (=dṛṣṭvā sorṇabhruvam), T. b. śubhajala°, A. c. °veśaṁ, A. cd. °pālanārha saṁcakṣubhe, A.

10. d. sasaṁsa, A ; skyes-bu-rnams-kyis de smras-so (puruṣāḥ śaśaṁsuḥ), T.

11. b. vipre ya, A ; bram-ze-rnams-kyis gaṅ, T. c. sa eva śākṣyādhipates, A ; de ni ḥdi yin-no, T. d. nirāhyate (??, much rubbed), A ; ṅes-par-mthoṅ-ba-yi, T.

ततः श्रुतार्थो मनसागतास्थो राजा बभाषे पुरुषं तमेव ।
विज्ञायतां क्व प्रतिगच्छतीति तथेत्यथैनं पुरुषोऽन्वगच्छत् ॥ १२ ॥
अलोलचक्षुर्युगमात्रदर्शी निवृत्तवाग्यन्त्रितमन्दगामी ।
चचार भिक्षां स तु भिक्षुवर्यो निधाय गात्राणि चलं च चेतः ॥१३॥
आदाय भैक्षं च यथोपपन्नं ययौ गिरेः प्रस्रवणं विविक्तम् ।
न्यायेन तत्राभ्यवहृत्य चैनन्महीधरं पाण्डवमारुरोह ॥ १४ ॥
तस्मिन्नवौ लोध्रवनोपगूढे मयूरनादप्रतिपूर्णकुञ्जे ।
काषायवासाः स बभौ नृसूर्यो यथोदयस्योपरि बालसूर्यः ॥ १५ ॥
तत्रैनमालोक्य स राजभृत्यः श्रेण्याय राज्ञे कथयांचकार ।
संश्रुत्य राजा स च बाहुमान्यात्तत्र प्रतस्थे निभृतानुयात्रः ॥ १६ ॥
स पाण्डवं पाण्डवतुल्यवीर्यः शैलोत्तमं शैलसमानवर्ष्मा ।
मौलीधरः सिंहगतिर्नृसिंहश्चलत्सटः सिंह इवारुरोह ॥ १७ ॥
ततः स्म तस्योपरि शृङ्गभूतं शान्तेन्द्रियं पश्यति बोधिसत्त्वम् ।
पर्यङ्कमास्थाय विरोचमानं शशाङ्कमुद्यन्तमिवाभ्रकुञ्जात् ॥ १८ ॥

12. a. °gatārtho, A ; yid-kyis chags-śiṅ zhen-gyur-paḥi, T. c. de ni gaṅ-du soṅ zhes (=sa kva gacchatīti), T. d. nvagacchan, A.

13. d. ṅes-bsdams-nas (nibadhya ?), T ; nivārya, Windisch.

14. b. praśravaṇaṁ, A. cd. cainaṁ mahīdharaṁ, A.

15. a. tasmin vanau lodhravanopaga(?ṛ?)dhe, A ; rodhraḥi nags-kyis ñe-bar-sbas-paḥi ri-bo der, T ; 'on this mountain with its forest of luxuriant trees', FP.

16. a. tatraivam, A ; der ni de ñid . . . mthoṅ-gyur-nas, T. b. śraiṇyāya, A.

17. a. °vīrya, A.

18. a. e.c. ; tana sma tasyopari, A ; de-nas de-yi steṅ-na (tatas tasyopari), T. c. virocamāna, A. d. śaśām udyantam (one syllable short), A ; ri-boṅ-gi mtuhan . . . byuṅ-ba, T.

तं रूपलक्ष्म्या च शमेन चैव धर्मस्य निर्माणमिवोपविष्टम् ।
सविस्मयः प्रश्रयवान्नरेन्द्रः स्वयंभुवं शक्र इवोपतस्थे ॥ १९ ॥
तं न्यायतो न्यायविदां वरिष्ठं समेत्य पप्रच्छ च धातुसाम्यम् ।
स चाप्यवोचत्सदृशेन साम्ना नृपं मनःस्वास्थ्यमनामयं च ॥ २० ॥
ततः शुचौ वारणकर्णनीले शिलातले संनिषसाद राजा ।
उपोपविश्यानुमतश्च तस्य भावं विजिज्ञासुरिदं बभाषे ॥ २१ ॥
प्रीतिः परा मे भवतः कुलेन क्रमागता चैव परीक्षिता च ।
जाता विवक्षा स्ववयो यतो मे तस्मादिदं स्नेहवचो निबोध ॥ २२ ॥
आदित्यपूर्वं विपुलं कुलं ते नवं वयो दीप्तमिदं वपुश्च ।
कस्मादियं ते मतिरक्रमेण भैक्षाक एवाभिरता न राज्ये ॥ २३ ॥
गात्रं हि ते लोहितचन्दनार्हं काषायसंश्लेषमनर्हमेतत् ।
हस्तः प्रजापालनयोग्य एष भोक्तुं न चार्हः परदत्तमन्नम् ॥ २४ ॥

तत्सौम्य राज्यं यदि पैतृकं त्वं
स्नेहात्पितुर्नेच्छसि विक्रमेण ।
न च क्रमं मर्षयितुं मतिस्ते
भुङ्क्ष्वार्धमस्मद्विषयस्य शीघ्रम् ॥ २५ ॥

19. b. nirmānam ivopadiṣtaṁ, A ; sprul-ba bzhin-du ñe-bar-bzhugs, T.

20. b. dhātuśāmyaṁ, A ; khams mñam gyur-pa, T.

21. b. śilātale' (gap for missing syllable) niṣasāda, A ; rdo-baḥi log-la . . . yaṅ-dag-ṅes-gnas-śiṅ, T. c. nṛpopaviśyā°, A ; ñe-sar ñe-bar-bsdad-nas, T.

22. c. yātā vivakṣā sutayā yato me, A ; gaṅ-phyir bdag-la raṅ-gi na-tshod smra-ḥdod-pa skyes-te, T.

23. b. vanam vayo, A ; na-tshod gsar-pa, T. d. bhaikṣyāka, A.

24. ab. °arhaṁṁ kāṣāya°, A.

25. c. kṣamaṁ, A ; rim-par, T. d. bhuktvārddham, A ; phyed-la loṅs-spyod mdzod, T.

एवं हि न स्यात्स्वजनावमर्दः
कालक्रमेणापि शमश्रया श्रीः ।
तस्मात्कुरुष्व प्रणयं मयि त्वं
सद्भिः सहीया हि सतां समृद्धिः ॥ २६ ॥

अथ त्विदानीं कुलगर्वितत्वा-
दस्मासु विश्रम्भगुणो न तेऽस्ति ।
व्यूढान्यनीकानि विगाह्य बाणै-
र्मया सहायेन परान् जिगीष ॥ २७ ॥

तद्बुद्धिमत्रान्यतरां वृणीष्व धर्मार्थकामान्विधिवद्भजस्व ।
व्यत्यस्य रागादिह हि त्रिवर्गं प्रेत्येह च भ्रंशमवाप्नुवन्ति ॥ २८ ॥

यो ह्यर्थधर्मौ परिपीड्य कामः
स्याद्धर्मकामौ परिभूय चार्थः ।
कामार्थयोश्चोपरमेण धर्म-
स्त्याज्यः स कृत्स्नो यदि काङ्क्षितोऽर्थः ॥ २९ ॥

तस्मात्त्रिवर्गस्य निषेवणेन त्वं रूपमेतत्सफलं कुरुष्व ।
धर्मार्थकामाधिगमं ह्यनूनं नृणामनूनं पुरुषार्थमाहुः ॥ ३० ॥

26. b. śa(ma added in margin)śrayā śrīḥ, A ; dpal gaṅ bsṅags (bsdags, Peking edition)-pa-ste (equivalent uncertain), T ; śamāśrayā, Böhtlingk.

27. b. visrambha°, A. c. vyūhāny any(corrected to n)ekāvi vigāhya, A ; sde rgyas-rnams ni . . . rnam-par-dkrugs byas-nas, T. d. parā jigīṣa, A ; pha-rol-rnams ni pham-par mdzod, T.

28. a. atrānyataraṁ, A. d. bhraṁsam, A.

29. a. yo hy atra dharmmo, A ; gaṅ-zhig don daṅ chos-la, T. b. dharmmakāmye(?mpe?, corrected to mo), A. c. ñe-bar-zhi-bas (copaśamena ?), T.

30. a. nisevanena, A.

तन्निष्फलौ नार्हसि कर्तुमेतौ
पीनौ भुजौ चापविकर्षणार्हौ ।
मान्धातृवज्जेतुमिमौ हि योग्यौ
लोकानपि त्रीनिह किं पुनर्गाम् ॥ ३१ ॥

स्नेहेन खल्वेतदहं ब्रवीमि नैश्वर्यरागेण न विस्मयेन ।
इमं हि दृष्ट्वा तव भिक्षुवेषं जातानुकम्पोऽस्म्यपि चागताश्रुः ॥३२॥

यावत्स्ववंशप्रतिरूप रूपं
न ते जराभ्येत्यभिभूय भूयः ।
तद्भुङ्क्ष्व भिक्षाश्रमकाम कामान्
कालेऽसि कर्ता प्रियधर्म धर्मम् ॥ ३३ ॥

शक्नोति जीर्णः खलु धर्ममाप्तुं कामोपभोगेष्वगतिर्जरायाः ।
अतश्च यूनः कथयन्ति कामान्मध्यस्य वित्तं स्थविरस्य धर्मम् ॥३४॥

धर्मस्य चार्थस्य च जीवलोके प्रत्यर्थिभूतानि हि यौवनानि ।
संरक्ष्यमाणान्यपि दुर्ग्रहाणि कामा यतस्तेन पथा हरन्ति ॥ ३५ ॥

वयांसि जीर्णानि विमर्शवन्ति धीराण्यवस्थानपरायणानि ।
अल्पेन यत्नेन शमात्मकानि भवन्त्यगत्यैव च लज्जया च ॥ ३६ ॥

31. a. nisphalo, A. cd. yogyo lokān ahi trīṇ ihi kiṁ pur (gap for missing syllable) ggām̐, A ; ḥjig-rten gsum-rnams kyaṅ . . . ḥos-pa yin-na sa ḥdir smos-ci-dgos, T.

32. c. °veśaṁ, A.

33. A transposes the two lines ; T as in text. c. bhukṣva bhikṣyāśrama°, A. d. priyadharmma dharmma, A.

34. cd. kāmām madhyasya, A. d. dharmma, A.

35. d. tena yathā haranti, A ; lam de-las (read la ?) ḥphrogs-par-byed (tena pathā hriyante ?), T ; svena pathā, Windisch.

36. a. vimarṣayanti, A ; rnam-dpyod ldan-pa-ste, T. d. agatyeva, A ; soṅ-ba ma-yin phyir, T.

अतश्च लोलं विषयप्रधानं प्रमत्तमक्षान्तमदीर्घदर्शि ।
बहुच्छलं यौवनमभ्यतीत्य निस्तीर्य कान्तारमिवाश्वसन्ति ॥ ३७ ॥

तस्माद्धीरं चपलप्रमादि नवं वयस्तावदिदं व्यपैतु ।
कामस्य पूर्वं हि वयः शरव्यं न शक्यते रक्षितुमिन्द्रियेभ्यः ॥ ३८ ॥

अथो चिकीर्षा तव धर्म एव यजस्व यज्ञं कुलधर्म एषः ।
यज्ञैरधिष्ठाय हि नाकपृष्ठं ययौ मरुत्वानपि नाकपृष्ठम् ॥ ३९ ॥

सुवर्णकेयूरविदष्टबाहवो मणिप्रदीपोज्ज्वलचित्रमौलयः ।
नृपर्षयस्तां हि गतिं गता मखैः श्रमेण यामेव महर्षयो ययुः ॥४०॥

इत्येवं मगधपतिर्वचो बभाषे
यः सम्यग्वलभिदिव ब्रुवन् बभासे ।
तच्छ्रुत्वा न स विचचाल राजसूनुः
कैलासो गिरिरिव नैकचित्रसानुः ॥ ४१ ॥

इति बुद्धचरिते महाकाव्येऽश्वघोषकृते श्रेण्याभिगमनो नाम दशमः सर्गः ॥ १० ॥

38. b. vyapetu, A.

39. c. yajñer, A. ‘You should mount the back of the spiritual nāga’ (nāgapṛṣṭhaṁ), C.

40. a. rnam-par-bciṅs-paḥi phyag-rnams (°vibaddhabāhavo ?), T.

41. a. A omits vaco; magadha-yi bdag-pos tshig smras-pa, T. b. dhruvam babhāṣe, A; smra-ba yaṅ-dag mdzes, T.

## CANTO XI

अथैवमुक्तो मगधाधिपेन सुहृन्मुखेन प्रतिकूलमर्थम् ।
स्वस्थोऽविकारः कुलशौचशुद्धः शौद्धोदनिर्वाक्यमिदं जगाद ॥ १ ॥
नाश्चर्यमेतद्भवतो विधानं जातस्य हर्यङ्ककुले विशाले ।
यन्मित्रपक्षे तव मित्रकाम स्याद्वृत्तिरेषा परिशुद्धवृत्तेः ॥ २ ॥
असत्सु मैत्री स्वकुलानुवृत्ता न तिष्ठति श्रीरिव विक्लवेषु ।
पूर्वैः कृतां प्रीतिपरंपराभिस्तामेव सन्तस्तु विवर्धयन्ति ॥ ३ ॥
ये चार्थकृच्छ्रेषु भवन्ति लोके
समानकार्याः सुहृदां मनुष्याः ।
मित्राणि तानीति परैमि बुद्ध्या
स्वस्थस्य वृद्धिष्विह को हि न स्यात् ॥ ४ ॥
एवं च ये द्रव्यमवाप्य लोके मित्रेषु धर्मे च नियोजयन्ति ।
अवाप्तसाराणि धनानि तेषां भ्रष्टानि नान्ते जनयन्ति तापम् ॥ ५ ॥
सुहृत्तया चार्यतया च राजन् खल्वेष यो मां प्रति निश्चयस्ते ।
अत्रानुनेष्यामि सुहृत्तयैव ब्रूयामहं नोत्तरमन्यदत्र ॥ ६ ॥

1. b. sukr̥nmukhena, A; bśes-kyi sgo-nas, T. c. kulaśoca°, A.

2. a. bhavato bhidhātu, A ; khyod-kyi cho-ga, T ; bhavato ’bhidhānaṁ, Böhtlingk. d. pariśuddhavr̥ttaḥ, A ; yoṅs-su-dag-paḥi spyod-pas, T.

3. a. svakulānurūpā, A ; raṅ rigs rjes-su-spyod-pas, T.

5. c. aptasārāṇi (one syllable short), A ; sñiṅ-po thob-pa-ste, T.

6. b. e.c. ; vihāya prāg eva ti niścayas te, A ; khyod-kyi ṅes-pa gaṅ-zhig bdag-la dmigs-pa ḥdi (=text, omitting khalu), T.

अहं जरामृत्युभयं विदित्वा मुमुक्षया धर्ममिमं प्रपन्नः ।
बन्धून् प्रियानश्रुमुखान्विहाय प्रागेव कामानशुभस्य हेतून् ॥ ७ ॥
नाशीविषेभ्यो हि तथा बिभेमि नैवाशनिभ्यो गगनाच्च्युतेभ्यः ।
न पावकेभ्योऽनिलसंहितेभ्यो यथा भयं मे विषयेभ्य एव ॥ ८ ॥

कामा ह्यनित्याः कुशलार्थचौरा
रिक्ताश्च मायासदृशाश्च लोके ।
आशास्यमाना अपि मोहयन्ति
चित्तं नृणां किं पुनरात्मसंस्थाः ॥ ९ ॥

कामाभिभूता हि न यान्ति शर्म त्रिपिष्टपे किं बत मर्त्यलोके ।
कामैः सतृष्णस्य हि नास्ति तृप्तिर्यथेन्धनैर्वातसखस्य वह्नेः ॥ १० ॥
जगत्यनर्थो न समोऽस्ति कामैर्मोहाच्च तेष्वेव जनः प्रसक्तः ।
तत्त्वं विदित्वैवमनर्थभीरुः प्राज्ञः स्वयं कोऽभिलषेदनर्थम् ॥ ११ ॥
समुद्रवस्त्रामपि गामवाप्य पारं जिगीषन्ति महार्णवस्य ।
लोकस्य कामैर्न वितृप्तिरस्ति पतद्भिरम्भोभिरिवार्णवस्य ॥ १२ ॥
देवेन वृष्टेऽपि हिरण्यवर्षे द्वीपान्समग्रांश्चतुरोऽपि जित्वा ।
शक्रस्य चार्धासनमप्यवाप्य मान्धातुरासीद्विषयेष्वतृप्तिः ॥ १३ ॥
भुक्त्वापि राज्यं दिवि देवतानां शतक्रतौ वृत्रभयात्प्रनष्टे ।
दर्पान्महर्षीनपि वाहयित्वा कामेष्वतृप्तो नहुषः पपात ॥ १४ ॥

8. a. bibhaimi, A.
11. ab. kāmaiḥ mohāc, A. b. praśaktaḥ, A.
12. c. na hi tṛptir, Lüders ; T indeterminate.
13. b. loṅs-spyod-de (bhuñjan for jitvā ?), T. d. āśīd, A.
14. b. praṇaṣṭe, A. d. naghusaḥ prapāta, A.

ऐडश्च राजा त्रिदिवं विगाह्य नीत्वापि देवीं वशमुर्वशीं ताम् ।
लोभादृषिभ्यः कनकं जिहीर्षुर्जगाम नाशं विषयेष्वतृप्तः ॥ १५ ॥
बलेर्महेन्द्रं नहुषं महेन्द्रादिन्द्रं पुनर्ये नहुषादुपेयुः ।
स्वर्गे क्षितौ वा विषयेषु तेषु को विश्वसेद्भाग्यकुलाकुलेषु ॥ १६ ॥

चीराम्बरा मूलफलाम्बुभक्षा
जटा वहन्तोऽपि भुजङ्गदीर्घाः ।
यैर्नान्यकार्या मुनयोऽपि भग्नाः
कः कामसंज्ञान्मृगयेत शत्रून् ॥ १७ ॥

उग्रायुधश्चोग्रधृतायुधोऽपि येषां कृते मृत्युमवाप भीष्मात् ।
चिन्तापि तेषामशिवा वधाय सद्वृत्तिनां किं पुनरव्रतानाम् ॥१८॥
आस्वादमल्पं विषयेषु मत्वा संयोजनोत्कर्षमतृप्तिमेव ।
सद्भ्यश्च गर्हां नियतं च पापं कः कामसंज्ञं विषमाददीत ॥ १९ ॥
कृष्यादिभिः कर्मभिरर्दितानां कामात्मकानां च निशम्य दुःखम् ।
स्वास्थ्यं च कामेष्वकुतूहलानां कामान्विहातुं क्षममात्मवद्भिः ॥२०॥

15. a. eḍaś ca, A. cd. jihīrṣu jagāma, A.

16. a. naghuṣa, A. b. naghuṣād, A.

17. c. yair anyakāryā, A ; gaṅ-gis don gzhan ma-yin, T ; 'peaceful and seeking nothing', C ; 'seeking for *mokṣa* by separation from the desires', FP.

18. a. ugrāṣudhaś, A. b. bhīsmāt, A. d. e.c. ; tadvṛttināṁ kim pur avratānāṁ (one syllable short), A ; spyod-rnams-kyi ḥjoms-phyir de-phyir brtul-zhugs rnams-kyi smos-ci-dgos (=vṛttīnāṁ vadhāya tat kiṁ punar vratānām), T ; tadvṛttitā, Windisch.

19. a. āśvādam, A ; mya-ṅan (for myoṅ-ba ?), T. b. saṁyojanātkarṣam, A. c. garhā, A.

20. a. kṛṣyādibhir ddharmmabhir anvitānāṁ, A ; zhiṅ-gi las-la sogs-pa-rnams-kyis ñam-thag-ciṅ, T ; 'every difficult means of livelihood', C.

ज्ञेया विपत्कामिनि कामसंपत्सिद्धेषु कामेषु मदं ह्युपैति ।
मदादकार्यं कुरुते न कार्यं येन क्षतो दुर्गतिमभ्युपैति ॥ २१ ॥
यत्नेन लब्धाः परिरक्षितास्च ये विप्रलभ्य प्रतियान्ति भूयः ।
तेष्वात्मवान्याचितकोपमेषु कामेषु विद्वानिह को रमेत ॥ २२ ॥

अन्विष्य चादाय च जाततर्षा
यानत्यजन्तः परियान्ति दुःखम् ।
लोके तृणोल्कासदृशेषु तेषु
कामेषु कस्यात्मवतो रतिः स्यात् ॥ २३ ॥

अनात्मवन्तो हृदि यैर्विदष्टा
विनाशमर्छन्ति न यान्ति शर्म ।
क्रुद्धोग्रसर्पप्रतिमेषु तेषु
कामेषु कस्यात्मवतो रतिः स्यात् ॥ २४ ॥

अस्थि क्षुधार्ता इव सारमेया
भुक्त्वापि यान्नैव भवन्ति तृप्ताः ।
जीर्णास्थिकङ्कालसमेषु तेषु
कामेषु कस्यात्मवतो रतिः स्यात् ॥ २५ ॥

ये राजचौरोदकपावकेभ्यः
साधारणत्वाज्जनयन्ति दुःखम् ।
तेषु प्रविद्धामिषसंनिभेषु
कामेषु कस्यात्मवतो रतिः स्यात् ॥ २६ ॥

21. d. kṣate, A ; zad-ciṅ, T.

22. a. parirakṣitaś, A. d. vidvān ihi, A ; ḥdi-na mkhas-pa, T.

24. c. kruddhograśarppa°, A ; kun-nas ḥkhros-paḥi sbrul (saṁkruddha-sarpa°), T.

यत्र स्थितानामभितो विपत्तिः शत्रोः सकाशादपि बान्धवेभ्यः ।
हिंस्रेषु तेष्वायतनोपमेषु कामेषु कस्यात्मवतो रतिः स्यात् ॥ २७ ॥

गिरौ वने चाप्सु च सागरे च
यान् भ्रंशमर्छन्ति विलङ्घमानाः ।
तेषु द्रुमप्राग्रफलोपमेषु
कामेषु कस्यात्मवतो रतिः स्यात् ॥ २८ ॥

तीव्रैः प्रयत्नैर्विविधैरवाप्ताः क्षणेन ये नाशमिह प्रयान्ति ।
स्वप्नोपभोगप्रतिमेषु तेषु कामेषु कस्यात्मवतो रतिः स्यात् ॥ २९ ॥

यानर्जयित्वापि न यान्ति शर्म विवर्धयित्वा परिपालयित्वा ।
अङ्गारकर्षूप्रतिमेषु तेषु कामेषु कस्यात्मवतो रतिः स्यात् ॥ ३० ॥

विनाशमीयुः कुरवो यदर्थं वृष्ण्यन्धका मेखलदण्डकाश्च ।
सूनासिकाष्ठप्रतिमेषु तेषु कस्यात्मवतो रतिः स्यात् ॥ ३१ ॥

सुन्दोपसुन्दावसुरौ यदर्थमन्योन्यवैरप्रसृतौ विनष्टौ ।
सौहार्दविश्लेषकरेषु तेषु कामेषु कस्यात्मवतो रतिः स्यात् ॥ ३२ ॥

27. b. śakāśād api bāndhaveṣu (corrected in margin to °vebhyaḥ), A; gñer-ḥdun ḥbrel-pa-rnams-las kyaṅ, T.

28. b. yadbhraṃśam arcchanty abhilaṅghamānāḥ, A; gaṅ-la rnam-par-ḥphyo-ba-rnams ni lhuṅ ḥgyur-te, T. c. drumaprāgramalo°, A; ljon-śiṅ rtse-moḥi ḥbras-bu, T.

29. a. tīvvaiḥ, A; drag-po, T. c. svapnop(?g?)rabhoga°, A; rmi-lam ñe-bar-loṅs-spyod, T.

30. a. yān acc(??)ayitvāpi, A; gaṅ-rnams bsgrubs-nas, T. c. aṅgāra-karṣṇy(corrected to rṣ)apra°, A; lci-baḥi me-ma-mur, T; 'a firepit', C.

31. b. e.c.; maithiladaṇḍakāś ca, A; T omits the *pāda*; 'the Mekhali-Daṇḍa(ka)s', C. c. ro-bsregs śiṅ ('corpse-burning wood', śūnāśikāṣṭha° ?), T; sūnāsikāṣṭha°, C.

32. b. anyonyaveraprasṛto, A.

येषां कृते वारिणि पावके च क्रव्यात्सु चात्मानमिहोत्सृजन्ति ।
सपत्नभूतेष्वशिवेषु तेषु कामेषु कस्यात्मवतो रतिः स्यात् ॥ ३३ ॥
कामार्थमज्ञः कृपणं करोति प्राप्नोति दुःखं वधबन्धनादि ।
कामार्थमाशाकृपणस्तपस्वी मृत्युं श्रमं चार्छति जीवलोकः ॥३४॥
गीतैर्ह्रियन्ते हि मृगा वधाय रूपार्थमग्नौ शलभाः पतन्ति ।
मत्स्यो गिरत्यायसमामिषार्थी तस्मादनर्थं विषयाः फलन्ति ॥३५॥
कामास्तु भोगा इति यन्मतिः स्याद्भोगा न केचित्परिगण्यमानाः ।
वस्त्रादयो द्रव्यगुणा हि लोके दुःखप्रतीकार इति प्रधार्याः ॥३६॥
इष्टं हि तर्षप्रशमाय तोयं क्षुन्नाशहेतोरशनं तथैव ।
वातातपाम्ब्वावरणाय वेश्म कौपीनशीतावरणाय वासः ॥ ३७ ॥
निद्राविघाताय तथैव शय्या यानं तथाध्वश्रमनाशनाय ।
तथासनं स्थानविनोदनाय स्नानं मृजारोग्यबलाश्रयाय ॥ ३८ ॥

33. a. kāsāndh(?rth?)am ajñaḥ kṛpa pāvake ca, A; gaṅ-dag-rnams-kyi don-du chu daṅ me-la daṅ, T; 'he may bind his body and throw himself into fire and water', C.

34. a. kṛpanaṅ, A. c. tapaśvī, A. d. mṛtyu śramaṁ, A; ḥchiṅ-ba (for ḥchi-ba) daṅ ni ṅal-ba, T.

35. a. gītai hriyaṁte, A. b. śalabhā, A. cd. matsyo giranty āyasam āmiṣārthīn tasmād, A; śa-dag don gñer ña, T; 'the pool fish longing for the baited hook', C; 'the fish in the water hangs on the hook on account of taking the bait', FP.

36. ab. yan mataḥ syāt bhogā, A; ḥdod-paḥi loṅs-spyod yin zhes gaṅ-gi blo yin-la (kāmasya bhogā iti yanmatiḥ syād?), T; mataṁ, Co. b. kha-cig loṅs-spyod-rnams ni yoṅs-su-spyod-pa-ste (=kecid bhogāḥ paricaryamāṇāḥ, or parivartyamānāḥ), T; pariganyamāṇāḥ, A.

37. a. toya, A. c. vātātapāṁvāvaraṇāya, A; rluṅ daṅ gduṅ-ba sgrib-pa ched-du (=vātātapāvaraṇāya), T. d. kopīna° (?kopane°?), A.

38. a. de-bzhin . . . gnas yin-la (tathāsti vāso?), T; 'one sleeps to drive off drowsiness', C. b. °śramaṇāśanāya, A. d. sṛjārogya°, A; gtsaṅ daṅ nad-med, T; 'to remove dirt one bathes', C.

दुःखप्रतीकारनिमित्तभूता-
स्तस्मात्प्रजानां विषया न भोगाः ।
अश्नामि भोगानिति कोऽभ्युपेया-
त्प्राज्ञः प्रतीकारविधौ प्रवृत्तः ॥ ३९ ॥

यः पित्तदाहेन विदह्यमानः शीतक्रियां भोग इति व्यवस्येत् ।
दुःखप्रतीकारविधौ प्रवृत्तः कामेषु कुर्यात्स हि भोगसंज्ञाम् ॥४०॥

कामेष्वनैकान्तिकता च यस्मा-
दतोऽपि मे तेषु न भोगसंज्ञा ।
य एव भावा हि सुखं दिशन्ति
त एव दुःखं पुनरावहन्ति ॥ ४१ ॥

गुरूणि वासांस्यगुरूणि चैव सुखाय शीते ह्यसुखाय घर्मे ।
चन्द्रांशवश्चन्दनमेव चोष्णे सुखाय दुःखाय भवन्ति शीते ॥ ४२ ॥

द्वन्द्वानि सर्वस्य यतः प्रसक्ता-
न्यलाभलाभप्रभृतीनि लोके ।
अतोऽपि नैकान्तसुखोऽस्ति कश्चि-
न्नैकान्तदुःखः पुरुषः पृथिव्याम् ॥ ४३ ॥

39. ab. °bhūtā tasmāt, A. b. de-bzhin skye-dgu-rnams (tathā prajānāṁ), T; ‘therefore’, C. c. annāni bhogā iti, Gawroński; loṅs-spyod-rnams ni bzaḥ zhes (indeterminate), T. d. e.c. Finot; pravṛttān, A; rab-tu-zhi-baḥi cho-gar rab-zhugs śes-rab-can (=text?), T.

40. a. pittadāhana, A; ḥgro-baḥi (for dro-baḥi?) gduṅ-bas (uncertain), T; ‘a man who has got a burning fever’, C. c. sdug-bsṅal zhi-baḥi bdag-ñid-la (duḥkhapratīkāratayā?), T. d. bhogasaṁjñaṁ, A.

41. a. yasyād, A. b. T omits api.

42. b. dharmme, A; dro-baḥi tshe-na, T. c. candrāṁśava candanam, A.

43. a. dvandāni, A. praśaktāny, A; rab-zhugs-te (pravṛttāny), T. d. paruṣaḥ pṛthivyāṁ, A; sa-la skyes-bu, T.

दृष्ट्वा विमिश्रां सुखदुःखतां मे
राज्यं च दास्यं च मतं समानम्।
नित्यं हसत्येव हि नैव राजा
न चापि संतप्यत एव दासः ॥ ४४ ॥

आज्ञा नृपत्वेऽभ्यधिकेति यत्स्यान्महान्ति दुःखान्यत एव राज्ञः।
आसङ्गकाष्ठप्रतिमो हि राजा लोकस्य हेतोः परिखेदमेति ॥४५॥

राज्ये नृपस्त्यागिनि बह्वमित्रे
विश्वासमागच्छति चेद्विपन्नः।
अथापि विश्रम्भमुपैति नेह
किं नाम सौख्यं चकितस्य राज्ञः ॥ ४६ ॥

यदा च जित्वापि महीं समग्रां वासाय दृष्टं पुरमेकमेव।
तत्रापि चैकं भवनं निषेव्यं श्रमः परार्थे ननु राजभावः ॥ ४७ ॥

राज्ञोऽपि वासोयुगमेकमेव क्षुत्संनिरोधाय तथान्नमात्रा।
शय्या तथैकासनमेकमेव शेषा विशेषा नृपतेर्मदाय ॥ ४८ ॥

तुष्ट्यर्थमेतच्च फलं यदीष्टमृतेऽपि राज्यान्मम तुष्टिरस्ति।
तुष्टौ च सत्यां पुरुषस्य लोके सर्वे विशेषा ननु निर्विशेषाः ॥४९॥

44. a. dṛṣṭvā ca miśrāṁ, A; rnam-par-ḥdres mthoṅ-nas, T. b. rāṁjya (gap for missing character) dāsya ca, A; rgyal-srid daṅ ni bran-ñid, T. d. hāsaḥ, A; bran, T.

45. a. gaṅ-phyir . . . lhag-par gyur (abhyadhikāsti yasmān?), T; 'if you say that the fact of a king giving orders makes him the best', C.

46. a. vaṅkamitre, A; bśes-min maṅ-por, T; 'on account of the many enemies of kings', C. c. visrambham upeti, A.

47. a. mahī, A.

48. Not in C. a. e.c. Böhtlingk; rājye pi vāse yugam, A; rgyal-po sdod-paḥi gnas kyaṅ gñaḥ-śiṅ gcig ñid-de (rājño 'pi vāso yugam ekam eva), T. b. tathānamātrā, A; de-bzhin . . . bzaḥ-ba tsam yin-la, T.

तस्मास्मि कामान् प्रति संप्रतार्यः
क्षेमं शिवं मार्गमनुप्रपन्नः ।
स्मृत्वां सुहृत्त्वं तु पुनः पुनर्मां
ब्रूहि प्रतिज्ञां खलु पालयेति ॥ ५० ॥

न ह्यस्म्यमर्षेण वनं प्रविष्टो न शत्रुबाणैरवधूतमौलिः ।
कृतस्पृहो नापि फलाधिकेभ्यो गृह्णामि नैतद्वचनं यतस्ते ॥ ५१ ॥

यो दन्दशूकं कुपितं भुजङ्गं
मुक्त्वा व्यवस्येद्धि पुनर्ग्रहीतुम् ।
दाहात्मिकां वा ज्वलितां तृणोल्कां
संत्यज्य कामान्स पुनर्भजेत ॥ ५२ ॥

अन्धाय यश्च स्पृहयेदनन्धो
बद्धाय मुक्तो विधनाय चाढ्यः ।
उन्मत्तचित्ताय च कल्यचित्तः
स्पृहां स कुर्याद्विषयात्मकाय ॥ ५३ ॥

भैक्षोपभोगीति च नानुकम्प्यः कृती जरामृत्युभयं तितीर्षुः ।
इहोत्तमं शान्तिसुखं च यस्य परत्र दुःखानि च संवृतानि ॥ ५४ ॥

50. b. kṣema, A; dge daṅ zhi-baḥi lam, T. d. smras-pa-ḥo (brūṣe or brūyāḥ?), T. pālayanti (corrected to °yeti), A; skyoṅ zhes, T.

51. a. e.c. Böhtlingk; vana praviṣto, A; nags-su zhugs-pa, T. b. avadhūmauliḥ (one syllable short), A; mgo-bo ḥdar-ba (avadhūtamūrdhā?), T; 'I have cast off the royal diadem', C. c. kṛtaspṛhā, A. d. naid vacanaṁ (one syllable short), A; tshig-de . . . ma-yin-no, T. de-phyir (tatas), T

52. a. bhujagaṁ, A. b. puna grahītuṁ, A. c. tṛnolkāṁ, A. d. bhajet, A.

53. a. spṛhayed anartho, A; ma-loṅ . . . ḥdod-pa-ste, T.

54. a. bhaiṣopabhogīti ca(?ra?), A; sloṅs-mo ñe-bar-rgyu zhes (bhaikṣopacārīti?), T.

लक्ष्म्यां महत्यामपि वर्तमानस्तृष्णाभिभूतस्त्वनुकम्पितव्यः ।
प्राप्नोति यः शान्तिसुखं न चेह परत्र दुःखैः प्रतिगृह्यते च ॥५५॥
एवं तु वक्तुं भवतोऽनुरूपं सत्त्वस्य वृत्तस्य कुलस्य चैव ।
ममापि वोढुं सदृशं प्रतिज्ञां सत्त्वस्य वृत्तस्य कुलस्य चैव ॥ ५६ ॥
अहं हि संसारशरेण विद्धो विनिःसृतः शान्तिमवाप्तुकामः ।
नेच्छेयमाप्तुं त्रिदिवेऽपि राज्यं निरामयं किं बत मानुषेषु ॥५७॥

त्रिवर्गसेवां नृप यत्तु कृत्स्नतः
परो मनुष्यार्थ इति त्वमात्थ माम् ।
अनर्थ इत्येव ममात्र दर्शनं
क्षयी त्रिवर्गो हि न चापि तर्पकः ॥ ५८ ॥
पदे तु यस्मिन्न जरा न भीर्न रुङ्
न जन्म नैवोपरमो न चाधयः ।
तमेव मन्ये पुरुषार्थमुत्तमं
न विद्यते यत्र पुनः पुनः क्रिया ॥ ५९ ॥

यदप्यवोचः परिपाल्यतां जरा नवं वयो गच्छति विक्रियामिति ।
अनिश्चयोऽयं चपलं हि दृश्यते जराप्यधीरा धृतिमच्च यौवनम् ॥६०॥

57. Not in C. a. saṁsārarasena, A ; ḥkhor-baḥi mdaḥ-yis, T ; 'I who have been shot at by the arrow of the *saṁsāra*', FP. b. viniḥsṛtaḥ, A. cd. nad-med mtho-ris-na (tridive . . . nirāmaye?), T.

58. a. brten-pa ḥdi (=sevām imām), T. yan tu kṛsnataḥ, A. b. tvam ārtha māṁ, A. c. e.c. ; anartha ity eva mamārthadarśanaṁ, A ; de-ltar don-med ces ni bdag-gi (so Peking edition) brtan-pa (so Peking edition, read bstan-pa) ḥdir (=anartha ity evaṁ mamātra darśanaṁ), T ; 'this too is *anartha*', C. d. trivarge, A.

59. ab. na bhīrur nna janma (one syllable short), A ; ḥjigs-min nad ma-yin skye-min, T.

60. a. pratipālyatāṁ, Gawroński. c. bahulaṁ hi, Kern.

स्वकर्मदक्षश्च यदान्तको जगद्
वयःसु सर्वेष्ववशं विकर्षति ।
विनाशकाले कथमव्यवस्थिते
जरा प्रतीक्ष्या विदुषा शमेप्सुना ॥ ६१ ॥

जरायुधो व्याधिविकीर्णसायको
यदान्तको व्याध इवाशिवः स्थितः ।
प्रजामृगान् भाग्यवनाश्रितांस्तुदन्
वयःप्रकर्षं प्रति को मनोरथः ॥ ६२ ॥

अतो युवा वा स्थविरोऽथवा शिशु-
स्तथा त्वरावानिह कर्तुमर्हति ।
यथा भवेद्धर्मवतः कृतात्मनः
प्रवृत्तिरिष्टा विनिवृत्तिरेव वा ॥ ६३ ॥

यदात्थ चापीष्टफलां कुलोचितां
कुरुष्व धर्माय मखक्रियामिति ।
नमो मखेभ्यो न हि कामये सुखं
परस्य दुःखक्रियया यदिष्यते ॥ ६४ ॥

61. b. vayassu sarvvesu vasam vikarṣati, A ; na-tshod kun-la dbaṅ-med rnam-par-ḥgugs-pa-ste, T. d. samepsunā, A ; zhi-ḥdod, T.

62. b. ivāśritaḥ sthitaḥ, A ; dge-ba ma-yin . . . bzhin gnas-pas, T. c. °āśritān sudan, A ; rten-rnams gtor-te, T. d. priti ko, A.

63. a. suto (corrected to ato), A ; de-phyir, T. c. kṛpātmanaḥ, A ; bdag-ñid byas-pa, T.

64. a. e.c. ; yad āttha cādīptaphalāṁ, A ; yaṅ-na ḥdod-paḥi ḥbras-bu . . . gaṅ smras-pa (yad āttha vāpīṣṭaphalāṁ), T. d. pad iṣyate, A ; gaṅ-zhig . . . ḥdod-pa-ste, T.

परं हि हन्तुं विवशं फलेप्सया
न युक्तरूपं करुणात्मनः सतः ।
क्रतोः फलं यद्यपि शाश्वतं भवे-
त्तथापि कृत्वा किमु यत्क्षयात्मकम् ॥ ६५ ॥

भवेच्च धर्मो यदि नापरो विधि-
र्व्रतेन शीलेन मनःशमेन वा ।
तथापि नैवार्हति सेवितुं क्रतुं
विशस्य यस्मिन् परमुच्यते फलम् ॥ ६६ ॥

इहापि तावत्पुरुषस्य तिष्ठतः प्रवर्तते यत्परहिंसया सुखम् ।
तदप्यनिष्टं सघृणस्य धीमतो भवान्तरे किं बत यन्न दृश्यते ॥६७॥

न च प्रतार्योऽस्मि फलप्रवृत्तये
भवेषु राजन् रमते न मे मनः ।
लता इवाम्भोधरवृष्टिताडिताः
प्रवृत्तयः सर्वगता हि चञ्चलाः ॥ ६८ ॥

इहागतश्चाहमितो दिदृक्षया
मुनेरराडस्य विमोक्षवादिनः ।
प्रयामि चाद्यैव नृपास्तु ते शिवं
वचः क्षमेथा मम तत्त्वनिष्ठुरम् ॥ ६९ ॥

65. a. hantu, A. b. yuktarupa, A. c. krato, A. gaṅ yaṅ (yad api?), T. d. sñiṅ-rjeḥi bdag-ñid gaṅ-gi de-ltar byas-nas ci (=tathā kṛtvā kiṁ yat kṛpātmakam), T; 'how much more then in doing hurt to creatures in sacrifice, when seeking what is not permanent', C.

66. a. dharme, Böhtlingk. ab. vidhi vatena, A[1]; brtul-zhugs-kyis... cha-ga (for cho-ga), T. b. manaḥsamena va, A; sems zhi-ba-yis-sam, T.

69. a. de-yi phyir (ato?), T; 'therefore', C.

अवेन्द्रवद्दिव्यव शश्वदर्कवद्गुणैरव श्रेय इहाव गामव ।
अवायुरार्यैरव सत्सुतानव श्रियश्च राजन्नव धर्ममात्मनः ॥ ७० ॥
हिमारिकेतूद्भवसंभवान्तरे यथा द्विजो याति विमोक्षयंस्तनुम् ।
हिमारिशत्रुक्षयशत्रुघातने तथान्तरे याहि विमोक्षयन्मनः ॥ ७१ ॥

नृपोऽब्रवीत्साञ्जलिरागतस्पृहो
यथेष्टमाप्नोतु भवानविघ्नतः ।
अवाप्य काले कृतकृत्यतामिमां
ममापि कार्यो भवता त्वनुग्रहः ॥ ७२ ॥

स्थिरं प्रतिज्ञाय तथेति पार्थिवे
ततः स वैश्वंतरमाश्रमं ययौ ।
परिव्रजन्तं तमुदीक्ष्य विस्मितो
नृपोऽपि वव्राज पुरिं गिरिव्रजम् ॥ ७३ ॥

इति बुद्धचरिते महाकाव्ये कामविगर्हणो नामैकादशः सर्गः ॥ ११ ॥

70. a. athendravad, A; dbaṅ-po bzhin bsruṅs, T. b. iho ca gām acaḥ, A; sa bsruṅs ḥdir ni . . . bsruṅs, T. c. āyair ava śatsutān, A; ḥphags-pa-yis bsruṅs dam-paḥi bu-rnams, T.

71. c. e.c.; °kṣayaśatrughātinas, A; khyim-gyi dgra ḥjoms naṅ (probably=text, but uncertain), T. d. e.c. Cappeller; vimocayan, A.

72. b. avighnyataḥ, A. c. bya-ba byas-pa . . . dus-su ḥdir (kāle kṛtakṛtyatām iha, for ito?), T.

73. c. samudikṣya, A; de mthoṅ-nas, T. d. vavrā puriṅ girivrajaṁ (one syllable short), A; ri-yi-tshogs-kyi groṅ-khyer-ñid-du soṅ, T.

## CANTO XII

ततः शमविहारस्य मुनेरिक्ष्वाकुचन्द्रमाः ।
अराडस्याश्रमं भेजे वपुषा पूरयन्निव ॥ १ ॥

स कालामसगोत्रेण तेनालोक्यैव दूरतः ।
उच्चैः स्वागतमित्युक्तः समीपमुपजग्मिवान् ॥ २ ॥

तावुभौ न्यायतः पृष्ट्वा धातुसाम्यं परस्परम् ।
दारव्योर्मेध्ययोर्वृष्योः शुचौ देशे निषेदतुः ॥ ३ ॥

तमासीनं नृपसुतं सोऽब्रवीन्मुनिसत्तमः ।
बहुमानविशालाभ्यां दर्शनाभ्यां पिबन्निव ॥ ४ ॥

विदितं मे यथा सौम्य निष्क्रान्तो भवनादसि ।
छित्त्वा स्नेहमयं पाशं पाशं दृप्त इव द्विपः ॥ ५ ॥

सर्वथा धृतिमच्चैव प्राज्ञं चैव मनस्तव ।
यस्त्वं प्राप्तः श्रियं त्यक्त्वा लतां विषफलामिव ॥ ६ ॥

नाश्चर्यं जीर्णवयसो यज्जग्मुः पार्थिवा वनम् ।
अपत्येभ्यः श्रियं दत्त्वा भुक्तोच्छिष्टामिव स्रजम् ॥ ७ ॥

1. a. samavihārasya, A; zhi-bar gnas-paḥi, T. d. pūjayann, A; gaṅ-ba, T.

2. b. teṇā° (corrected to tenā°), A. d. samīpam ujagmivān (one syllable short), A; draṅ-du ñe-bar-gśegs-pa-ḥo, T.

3. a. pṛṣṭ(?ṇ?)yā, A; dris-nas, T. d. śuco (corrected to guro?), A; gtsaṅ-bar, T. niṣīdatuḥ, A.

7. b. vasaṁ (corrected to vanaṁ), A.

इदं मे मतमाश्चर्यं नवे वयसि यद्भवान् ।
अभुक्त्वैव श्रियं प्राप्तः स्थितो विषयगोचरे ॥ ८ ॥

तद्विज्ञातुमिमं धर्मं परमं भाजनं भवान् ।
ज्ञानप्लवमधिष्ठाय शीघ्रं दुःखार्णवं तर ॥ ९ ॥

शिष्ये यद्यपि विज्ञाते शास्त्रं कालेन वर्ण्यते ।
गाम्भीर्याद्व्यवसायाच्च न परीक्ष्यो भवान्मम ॥ १० ॥

इति वाक्यमराडस्य विज्ञाय स नरर्षभः ।
बभूव परमप्रीतः प्रोवाचोत्तरमेव च ॥ ११ ॥

विरक्तस्यापि यदिदं सौमुख्यं भवतः परम् ।
अकृतार्थोऽप्यनेनास्मि कृतार्थ इव संप्रति ॥ १२ ॥

दिदृक्षुरिव हि ज्योतिर्यियासुरिव दैशिकम् ।
त्वद्दर्शनमहं मन्ये तितीर्षुरिव च प्लवम् ॥ १३ ॥

तस्मादर्हसि तद्वक्तुं वक्तव्यं यदि मन्यसे ।
जरामरणरोगेभ्यो यथायं परिमुच्यते ॥ १४ ॥

8. c. abhukteva, A ; ñid loṅs-ma-spyad-nas (pas, Weller), T.

10. a. gaṅ yaṅ (yad api ?), T. b. ḥjug-ste (vartate or vartyate), T ; ‘first one tests their abilities and thereafter one teaches them’, C ; vartate, Co. d. c.c. ;su(?)parīksyo, A ; yoṅs-rtog khyod ma-yin (na parīkṣito bhavān ?), T ; ‘I know already your good firm settled purpose, certainly you will be equal to learning and in the end nothing will be hid from you’, C

11. b. mi-yi draṅ-sroṅ des (sa nararṣiḥ), T.

13. a. didiksur, A ; blta-bar ḥdod-pas, T. c. tvaddarśanāha (one syllable short), A ; khyed mthoṅ-ba-la bdag-gis, T.

14. c. rga daṅ ḥchi-baḥi ḥjigs-rnams-las (=jarāmaraṇabhayebhyo), T ; ‘the troubles of birth (or, the troubles that produce), old age, disease and death’, C.

इत्यराडः कुमारस्य माहात्म्यादेव चोदितः ।
संक्षिप्तं कथयांचक्रे स्वस्य शास्त्रस्य निश्चयम् ॥ १५ ॥
श्रूयतामयमस्माकं सिद्धान्तः शृण्वतां वर ।
यथा भवति संसारो यथा चैव निवर्तते ॥ १६ ॥
प्रकृतिश्च विकारश्च जन्म मृत्युर्जरैव च ।
तत्तावत्सत्त्वमित्युक्तं स्थिरसत्त्व परेहि तत् ॥ १७ ॥
तत्र तु प्रकृतिं नाम विद्धि प्रकृतिकोविद ।
पञ्च भूतान्यहंकारं बुद्धिमव्यक्तमेव च ॥ १८ ॥
विकार इति बुध्यस्व विषयानिन्द्रियाणि च ।
पाणिपादं च वादं च पायूपस्थं तथा मनः ॥ १९ ॥
अस्य क्षेत्रस्य विज्ञानात्क्षेत्रज्ञ इति संज्ञि च ।
क्षेत्रज्ञ इति चात्मानं कथयन्त्यात्मचिन्तकाः ॥ २० ॥
सशिष्यः कपिलश्चेह प्रतिबुद्धिरिति स्मृतिः ।
सपुत्रोऽप्रतिबुद्धस्तु प्रजापतिरिहोच्यते ॥ २१ ॥

15. d. śvasya, A.

16. d. yathā vai parivarttate, A; ji-ltar ṅes-par ldog-pa ñid (=text, omitting ca), T; ‘ the matter of the origin and destruction of the universe ’, C.

17. d. paraihi naḥ, A; de śes-mdzod, T.

18. a. e.c. Böhtlingk; prakṛtir nnāma (originally prakṛtin nāma ?), A.

19. c. vācaṁ, Böhtlingk.

20. d. kathayaty, A.

21. b. pratibuddhi, A; rab-tu-rtogs (pratibuddhir or °buddha), T; pratibuddha, Co. c. e.c.; saputraḥ pratibuddhas tu, A; bu daṅ bcas-paḥi rtogs-pa daṅ (=A, with ca for tu), T; ‘ Kapila, the ṛṣi, and his brothers, sons and dependants, on this important principle of the ego, practised learning and obtained salvation. This Kapila is now Prajāpati ’, C.

जायते जीर्यते चैव बाध्यते म्रियते च यत् ।
तद्व्यक्तमिति विज्ञेयमव्यक्तं तु विपर्ययात् ॥ २२ ॥
अज्ञानं कर्म तृष्णा च ज्ञेयाः संसारहेतवः ।
स्थितोऽस्मिंस्त्रितये जन्तुस्तत्सत्त्वं नातिवर्तते ॥ २३ ॥
विप्रत्ययादहंकारात्संदेहादभिसंप्लवात् ।
अविशेषानुपायाभ्यां सङ्गादभ्यवपाततः ॥ २४ ॥
तत्र विप्रत्ययो नाम विपरीतं प्रवर्तते ।
अन्यथा कुरुते कार्यं मन्तव्यं मन्यतेऽन्यथा ॥ २५ ॥
ब्रवीम्यहमहं वेद्मि गच्छाम्यहमहं स्थितः ।
इतीहैवमहंकारस्त्वनहंकार वर्तते ॥ २६ ॥
यस्तु भावानसंदिग्धानेकीभावेन पश्यति ।
मृत्पिण्डवदसंदेह संदेहः स इहोच्यते ॥ २७ ॥
य एवाहं स एवेदं मनो बुद्धिश्च कर्म च ।
यश्चैवैष गणः सोऽहमिति यः सोऽभिसंप्लवः ॥ २८ ॥

22. b. vadhyate, A ; na-ba, T ; C omits. d. avyaktañ ca, A ; mi-gsal-ba yaṅ-ṅo, T.

23. b. jñoyā, A. c. sthito smi tritaye yantus, A ; gsum-po ḥdir gnas ḥgro-ba, T.

24. a. log-pa-las (viparyayād ?), T ; 'not believing', C. b. sandehād apr(?bh?)isambhavā, A ; the-tshom-las daṅ mṅon-ḥphyo-las, T ; 'doubt, excess', C.

25. a. log-pa (viparyayo ?), T ; 'not believing', C. d. mantavya, A.

27. a. bhāvan asaṁdigdhān, A ; the-tshom-med dṅos-rnams, T. c. the-tshom-med-pas (asaṁdehaḥ), T.

28. c. e.c. ; yaś caiveśa, A ; gaṅ-zhig graṅs de de ñid ṅed (=yaḥ sa ganaḥ sa evāham), T.

अविशेषं विशेषज्ञ प्रतिबुद्धाप्रबुद्धयोः ।
प्रकृतीनां च यो वेद सोऽविशेष इति स्मृतः ॥ २९ ॥

नमस्कारवषट्कारौ प्रोक्षणाभ्युक्षणादयः ।
अनुपाय इति प्राज्ञैरुपायज्ञ प्रवेदितः ॥ ३० ॥

सज्जते येन दुर्मेधा मनोवाग्बुद्धिकर्मभिः ।
विषयेष्वनभिष्वङ्ग सोऽभिष्वङ्ग इति स्मृतः ॥ ३१ ॥

ममेदमहमस्येति यद्दुःखमभिमन्यते ।
विज्ञेयोऽभ्यवपातः स संसारे येन पात्यते ॥ ३२ ॥

इत्यविद्यां हि विद्वान्स पञ्चपर्वां समीहते ।
तमो मोहं महामोहं तामिस्रद्वयमेव च ॥ ३३ ॥

तत्रालस्यं तमो विद्धि मोहं मृत्युं च जन्म च ।
महामोहस्त्वसंमोह काम इत्येव गम्यताम् ॥ ३४ ॥

यस्माद्त्र च भूतानि प्रमुह्यन्ति महान्त्यपि ।
तस्मादेष महाबाहो महामोह इति स्मृतः ॥ ३५ ॥

तामिस्रमिति चाक्रोध क्रोधमेवाधिकुर्वते ।
विषादं चान्धतामिस्रमविषाद प्रचक्षते ॥ ३६ ॥

29. b. rab-rgyas rab-rgyas ma-yin-paḥi (prativṛddhāpravṛddhayoḥ), T.

33. ab. pañcaparvvān, A : de-ltar mkhas-kyis ma-rig-pa gnas-skabs lṅa ni rab-thob-ste (=evam vidvān pañcaparvām avidyāṁ prāpnoti), T ; ' all the ignorant men in the world are united in five classes ', C.

34. b. moha, A. d. T omits eva ; ity avagamyatām, Co.

35. b. chen-por yaṅ ni (mahaty api ?), T. c. eṣa mābāho (one syllable short), A ; phyag-chen ḥdi-dag ni, T.

36. c. viṣāda, A. mi-śes mun-las gyur-pa ni (ajñatāmisram), T.

अनयाविद्यया बालः संयुक्तः पञ्चपर्वया ।
संसारे दुःखभूयिष्ठे जन्मस्वभिनिषिच्यते ॥ ३७ ॥
द्रष्टा श्रोता च मन्ता च कार्यकरणमेव च ।
अहमित्येवमागम्य संसारे परिवर्तते ॥ ३८ ॥
इहैभिर्हेतुभिर्धीमन् जन्मस्रोतः प्रवर्तते ।
हेत्वभावात्फलाभाव इति विज्ञातुमर्हसि ॥ ३९ ॥
तत्र सम्यङ्मतिर्विद्यान्मोक्षकाम चतुष्टयम् ।
प्रतिबुद्धाप्रबुद्धौ च व्यक्तमव्यक्तमेव च ॥ ४० ॥
यथावदेतद्विज्ञाय क्षेत्रज्ञो हि चतुष्टयम् ।
आजवंजवतां हित्वा प्राप्नोति पदमक्षरम् ॥ ४१ ॥
इत्यर्थं ब्राह्मणा लोके परमब्रह्मवादिनः ।
ब्रह्मचर्यं चरन्तीह ब्राह्मणान्वासयन्ति च ॥ ४२ ॥
इति वाक्यमिदं श्रुत्वा मुनेस्तस्य नृपात्मजः ।
अभ्युपायं च पप्रच्छ पदमेव च नैष्ठिकम् ॥ ४३ ॥
ब्रह्मचर्यमिदं चर्यं यथा यावच्च यत्र च ।
धर्मस्यास्य च पर्यन्तं भवान्व्याख्यातुमर्हति ॥ ४४ ॥

37. c. sdug-bsṅal gyur-pa-yi (duḥkhabhūte ?), T. d. bab-par-byed (abhinipātyate ?), T.

38. a. srotā, A. b. bya-ba daṅ ni rgyu ñid dag (kāryaṁ kāraṇam eva ca), T; 'I am that which does', C.

39. ity ebhi hetubhir, A; rgyu ḥdi-rnams-kyis ḥdi (for ḥdir), T. b. °jamasrotaḥ, A; skye-baḥi rgyun-la, T; 'the stream of birth and death', C. c. hetvabhāva phalābhāva, A; rgyu med-pa-las ḥbras-bu med, T; 'if this cause does not exist, the fruit also does not exist', C; hetvabhāve, Co. (e.c.).

40. a. yaṅ-dag ḥgro-ba (samyaggatir), T; 'call this the right opinion', C. c. rab-rgyas rab-rgyas-min (prativṛddhāpravṛddhau), T.

41. c. °javatā, A.

इत्यराडो यथाशास्त्रं विस्पष्टार्थं समासतः ।
तमेवान्येन कल्पेन धर्ममस्मै व्यभाषत ॥ ४५ ॥
अयमादौ गृहान्मुक्त्वा भैक्षाकं लिङ्गमाश्रितः ।
समुदाचारविस्तीर्णं शीलमादाय वर्तते ॥ ४६ ॥
संतोषं परमास्थाय येन तेन यतस्ततः ।
विविक्तं सेवते वासं निर्द्वन्द्वः शास्त्रवित्कृती ॥ ४७ ॥
ततो रागाद्भयं दृष्ट्वा वैराग्याच्च परं शिवम् ।
निगृह्णन्निन्द्रियग्रामं यतते मनसः शमे ॥ ४८ ॥
अथो विविक्तं कामेभ्यो व्यापादादिभ्य एव च ।
विवेकजमवाप्नोति पूर्वध्यानं वितर्कवत् ॥ ४९ ॥
तच्च ध्यानसुखं प्राप्य तत्तदेव वितर्कयन् ।
अपूर्वसुखलाभेन ह्रियते बालिशो जनः ॥ ५० ॥
शमेनैवंविधेनायं कामद्वेषविगर्हिणा ।
ब्रह्मलोकमवाप्नोति परितोषेण वञ्चितः ॥ ५१ ॥
ज्ञात्वा विद्वान्वितर्कांस्तु मनःसंक्षोभकारकान् ।
तद्वियुक्तमवाप्नोति ध्यानं प्रीतिसुखान्वितम् ॥ ५२ ॥
ह्रियमाणस्तया प्रीत्या यो विशेषं न पश्यति ।
स्थानं भास्वरमाप्नोति देवेष्वाभास्वरेषु सः ॥ ५३ ॥

45. a. ity arāḍe yathāśāstra, A ; de-ltar thub-pas bstan-bcos lta (evaṁ munir yathāśāstraṁ), T ; ' then that Arāḍa spoke according to the śāstras ', C.

46. b. ligam, A.

50. a. °sukhāṁ, A.

51. d. gnas-pa-ḥo (vāsitaḥ), T.

53. a. hriyamās tapā prītyā (one syllable short), A ; dgaḥ-ba de-yis phrogs-pa, T.

यस्तु प्रीतिसुखात्तस्माद्विवेचयति मानसम् ।
तृतीयं लभते ध्यानं सुखं प्रीतिविवर्जितम् ॥ ५४ ॥
यस्तु तस्मिन्सुखे मग्नो न विशेषाय यत्नवान् ।
शुभकृत्स्नैः स सामान्यं सुखं प्राप्नोति दैवतैः ॥ ५५ ॥
तादृशं सुखमासाद्य यो न रज्यत्युपेक्षकः ।
चतुर्थं ध्यानमाप्नोति सुखदुःखविवर्जितम् ॥ ५६ ॥
तत्र केचिद्व्यवस्यन्ति मोक्ष इत्यभिमानिनः ।
सुखदुःखपरित्यागादव्यापाराच्च चेतसः ॥ ५७ ॥
अस्य ध्यानस्य तु फलं समं देवैर्बृहत्फलैः ।
कथयन्ति बृहत्कालं बृहत्प्रज्ञापरीक्षकाः ॥ ५८ ॥
समाधेर्व्युत्थितस्तस्माद्दृष्ट्वा दोषांश्छरीरिणाम् ।
ज्ञानमारोहति प्राज्ञः शरीरविनिवृत्तये ॥ ५९ ॥
ततस्तद्ध्यानमुत्सृज्य विशेषे कृतनिश्चयः ।
कामेभ्य इव स प्राज्ञो रूपादपि विरज्यते ॥ ६० ॥

54. d. dgaḥ-baḥi bde daṅ bral-ba (sukhaprītivivarjitam), T.

55. Not in T. c. śubhakṛsnaiḥ, A.

56. b. e.c.; yo na rajyaty upekṣate, A; gaṅ-zhig chags-min btaṅ-sñoms-śiṅ (equivalent uncertain), T.

57. b. ity api (rewritten and marked to show error) māninaḥ, A; zhes mṅon-paḥi ṅa-rgyal-gyis, T. c. sdug-bsṅal zhi-phyir (°duḥkhapraśamanād ?), T.

58. b. bṛhatphaleḥ, A. c. bṛhatphalaṁ, A; chen-poḥi dus-su (ḥbras-bu, Weller e.c.), T; 'because of life there being for a long time, it is called *bṛhatphala*', C.

59. b. doṣāc charīriṇāṁ, A; lus-skyes skyon-rnams (doṣāṁś charīrajān ?), T; 'he sees that to have a body makes faults', C. c. bsam-gtan-la (dhyānam), T; 'advancing further, he practises *prajñā* and satiated separates himself from the fourth trance', C. d. °vinivarttaye, A.

60. c. satprājño, A; śes-rab-ldan de, T.

शरीरे खानि यान्यस्मिन्तान्यादौ परिकल्पयन् ।
घनेष्वपि ततो द्रव्येष्वाकाशमधिमुच्यते ॥ ६१ ॥

आकाशगतमात्मानं संक्षिप्य त्वपरो बुधः ।
तदेवानन्ततः पश्यन्विशेषमधिगच्छति ॥ ६२ ॥

अध्यात्मकुशलस्त्वन्यो निवर्त्यात्मानमात्मना ।
किंचिन्नास्तीति संपश्यन्नाकिंचन्य इति स्मृतः ॥ ६३ ॥

ततो मुञ्जादिषीकेव शकुनिः पञ्जरादिव ।
क्षेत्रज्ञो निःसृतो देहान्मुक्त इत्यभिधीयते ॥ ६४ ॥

एतत्तत्परमं ब्रह्म निर्लिङ्गं ध्रुवमक्षरम् ।
यन्मोक्ष इति तत्त्वज्ञाः कथयन्ति मनीषिणः ॥ ६५ ॥

इत्युपायश्च मोक्षश्च मया संदर्शितस्तव ।
यदि ज्ञातं यदि रुचिर्यथावत्प्रतिपद्यताम् ॥ ६६ ॥

जैगीषव्योऽथ जनको वृद्धश्चैव पराशरः ।
इमं पन्थानमासाद्य मुक्ता ह्यन्ये च मोक्षिणः ॥ ६७ ॥

इति तस्य स तद्वाक्यं गृहीत्वा तु विचार्य च ।
पूर्वहेतुबलप्राप्तः प्रत्युत्तरमुवाच ह ॥ ६८ ॥

61. ab. yāny asya tāny, A; lus ḥdi-la ni kha gaṅ-du de-la yoṅs-su-rtog-pa-ste (=śarīre 'smin khāni yatra tatra parikalpayan), T.

62. a. ākāśag(?)atam, A; nam-mkhar soṅ-baḥi, T. b. gzhan-du blo-ldan-gyis (=paratra budhaḥ), T.

63. a. kuśale(corrected to la)svanyo, A; T omits tu. b. nivatyā°, A, d. ākiṁcinya, A.

64. a. iśīkeva, A. c. nisṛto, A; ḥthon-pa-las (for la), T.

66. c. e.c. Böhtlingk; ruci, A. d. rtogs-par mdzod (pratibudhyatām ?). T; 'he who deeply believes should learn', C.

68. a. de-yi dam-paḥi tshig ḥdi (idaṁ tasya ca 'sadvākyaṁ), T. b. e.c. Bohtlingk; gṛhītvā na vicārya ca, A; rnam-par dpyod-pa yaṅ bzuṅ-nas (equivalent uncertain), T. c. °prāpta, A.

श्रुतं ज्ञानमिदं सूक्ष्मं परतः परतः शिवम् ।
क्षेत्रज्ञस्यापरित्यागादवैम्येतदनैष्ठिकम् ॥ ६९ ॥
विकारप्रकृतिभ्यो हि क्षेत्रज्ञं मुक्तमप्यहम् ।
मन्ये प्रसवधर्माणं बीजधर्माणमेव च ॥ ७० ॥
विशुद्धो यद्यपि ह्यात्मा निर्मुक्त इति कल्प्यते ।
भूयः प्रत्ययसद्भावादमुक्तः स भविष्यति ॥ ७१ ॥
ऋतुभूम्यम्बुविरहाद्यथा बीजं न रोहति ।
रोहति प्रत्ययैस्तैस्तैस्तद्वत्सोऽपि मतो मम ॥ ७२ ॥
यत्कर्माज्ञानतृष्णानां त्यागान्मोक्षश्च कल्प्यते ।
अत्यन्तस्तत्परित्यागः सत्यात्मनि न विद्यते ॥ ७३ ॥
हित्वा हित्वा त्रयमिदं विशेषस्तूपलभ्यते ।
आत्मनस्तु स्थितिर्यत्र तत्र सूक्ष्ममिदं त्रयम् ॥ ७४ ॥
सूक्ष्मत्वाच्चैव दोषाणामव्यापाराच्च चेतसः ।
दीर्घत्वादायुषश्चैव मोक्षस्तु परिकल्प्यते ॥ ७५ ॥
अहंकारपरित्यागो यश्चैष परिकल्प्यते ।
सत्यात्मनि परित्यागो नाहंकारस्य विद्यते ॥ ७६ ॥

69. a. śūksma, A. c. ksetrajya(?sya or sva rewritten)syāparityād (one syllable short), A ; śiṅ-śes yoṅs-su ma-btaṅ-phyir, T ; ' from non-abandonment of the cause-knower ', C.

71. b. nimukta, A.

72. a. e.c. ; °ambuvihārād, A ; chu me-las (for med-pas), T ; ' when the season, soil, water, heat, wind are separated from it ', C.

73. a. ṣat karmma°, A ; gaṅ-zhig . . . las, T.

74. c. ātmānas tu sthiti yatra, A.

75. a. śūkṣmatvāc, A. c. tshe ni . . . kyaṅ (āyusaś cāpi ?), T.

संख्यादिभिरमुक्तश्च निर्गुणो न भवत्ययम् ।
तस्मादसति नैर्गुण्ये नास्य मोक्षोऽभिधीयते ॥ ७७ ॥
गुणिनो हि गुणानां च व्यतिरेको न विद्यते ।
रूपोष्णाभ्यां विरहितो न ह्यग्निरुपलभ्यते ॥ ७८ ॥
प्राग्देहान्न भवेद्देही प्राग्गुणेभ्यस्तथा गुणी ।
तस्मादादौ विमुक्तः सन् शरीरी बध्यते पुनः ॥ ७९ ।
क्षेत्रज्ञो विशरीरश्च ज्ञो वा स्यादज्ञ एव वा ।
यदि ज्ञो ज्ञेयमस्यास्ति ज्ञेये सति न मुच्यते ॥ ८० ॥
अथाज्ञ इति सिद्धो वः कल्पितेन किमात्मना ।
विनापि ह्यात्मनाज्ञानं प्रसिद्धं काष्ठकुड्यवत् ॥ ८१ ॥
परतः परतस्त्यागो यस्मात्तु गुणवान् स्मृतः ।
तस्मात्सर्वपरित्यागान्मन्ये कृत्स्नां कृतार्थताम् ॥ ८२ ॥
इति धर्ममराडस्य विदित्वा न तुतोष सः ।
अकृत्स्नमिति विज्ञाय ततः प्रतिजगाम ह ॥ ८३ ॥
विशेषमथ शुश्रूषुरुद्रकस्याश्रमं ययौ ।
आत्मग्राहाच्च तस्यापि जगृहे न स दर्शनम् ॥ ८४ ॥

77. c. nairggunyai, A; de-phyir yon-tan-med gyur-na (=tasmāt sati nairgunye), T; ‘since this *guṇa* remains’, C.

79. c. kasmād, Co. (e.c.); de-phyir, T; ‘therefore’, C.

81. c. bdag daṅ bral yaṅ śes-pa ni (vināpy ātmanā jñānam), T; ‘to have knowledge without the *ātman*, the *ātman* then is the same as wood or stone’, C.

82. T omits b, c and d. d. kṛtsnāṁ kṛtāṁ (followed by faint traces of two characters, rthataṁ ?), A; ‘what one does is then finality’, C.

83. b. tutoṣa sa, A. c. akṛtsna iti, Hultzsch.

84. b. udrakasmā° (originally syā ?), A. c. ātmagrāhāt tu, Cappeller.

संज्ञासंज्ञित्वयोर्दोषं ज्ञात्वा हि मुनिरुद्रकः ।
आकिंचन्यात्परं लेभेऽसंज्ञासंज्ञात्मिकां गतिम् ॥ ८५ ॥

यस्माच्चालम्बने सूक्ष्मे संज्ञासंज्ञे ततः परम् ।
नासंज्ञी नैव संज्ञीति तस्मात्तत्रगतस्पृहः ॥ ८६ ॥

यतश्च बुद्धिस्तत्रैव स्थितान्यत्राप्रचारिणी ।
सूक्ष्मापट्वी ततस्तत्र नासंज्ञित्वं न संज्ञिता ॥ ८७ ॥

यस्माच्च तदपि प्राप्य पुनरावर्तते जगत् ।
बोधिसत्त्वः परं प्रेप्सुस्तस्मादुद्रकमत्यजत् ॥ ८८ ॥

ततो हित्वाश्रमं तस्य श्रेयोऽर्थी कृतनिश्चयः ।
भेजे गयस्य राजर्षेर्नगरीसंज्ञमाश्रमम् ॥ ८९ ॥

अथ नैरञ्जनातीरे शुचौ शुचिपराक्रमः ।
चकार वासमेकान्तविहाराभिरतिर्मुनिः ॥ ९० ॥

85. a. °tvayo ddoṣañ, A. cd. A omits avagraha ; ḥdu-śes ḥdu-śes-med bdag-min . . . thob, T ; ‘ separating himself from abiding in reflection and non-reflection ’, C.

86. a. śūkṣme, A. b. ḥdu-śes ḥdu-śes-med-las gzhan (=saṁjñāsaṁjñitvayoḥ param, omitting tataḥ), T. c. T omits iti. d. der ni re-ḥdod-med (tatra gataspṛhaḥ), T ; Co. divides like T.

87. a. tatreva, A. c. e.c. ; sūkṣmā ’padvī, A ; phra-zhiṅ rno-ldan (sūkṣmā paṭvī), T.

88. a. de-phyir (tasmāc), T. e.c. Böhtlingk ; tam api, A. prāptya, A. c. bodhisatvaṁ, A.

89. cd. rājarṣe nagarī°, A.

90. d. °vihāṁ(corrected to ha ?)rā°, A.

* * * तत्पूर्वं पञ्चेन्द्रियवशोद्धतान् ।
तपः * * व्रतिनो भिक्षून् पञ्च निरैक्षत ॥ ९१ ।
ते चोपतस्थुर्दृष्ट्वात्र भिक्षवस्तं मुमुक्षवः ।
पुण्यार्जितधनारोग्यमिन्द्रियार्था इवेश्वरम् ॥ ९२ ॥
संपूज्यमानस्तैः प्रह्वैर्विनयादनुवर्तिभिः ।
तद्वशस्थायिभिः शिष्यैर्लोलैर्मन इवेन्द्रियैः ॥ ९३ ॥
मृत्युजन्मान्तकरणे स्यादुपायोऽयमित्यथ ।
दुष्कराणि समारेभे तपांस्यनशनेन सः ॥ ९४ ॥
उपवासविधीन्नैकान् कुर्वन्नरदुराचरान् ।
वर्षाणि षट् शमप्रेप्सुरकरोत्कार्श्यमात्मनः ॥ ९५ ॥
अन्नकालेषु चैकैकैः स कोलतिलतण्डुलैः ।
अपारपारसंसारपारं प्रेप्सुरपारयत् ॥ ९६ ॥

91. A omits this verse and C puts it before verse 90. a. de-nas de ni snar brten-zhiṅ (=tatas tatpūrvaṃ āśritān), T. b. dbaṅ-po lṅa-yi dbaṅ-las kheṅs, T. c. mun-pas bsñen-paḥi brtul-zhugs-can (=tamaḥsaṃśrayavratinaḥ), T. d. dge-sloṅ lṅa-rnams ṅes (so Peking edition, des Weller) gzigs-so, T. 'The five bhikṣus had gone there before him. He saw the five bhikṣus, virtuously restraining all the senses, holding to the prohibitions, practising *tapas*, dwelling in that penance grove ', C.

92. a. pañcopatasthur, A ; dge-sloṅ de-rnams . . . ñe-bar-gnas, T. b. T omits mumuksavaḥ and adds api (kyaṅ) ; ' knowing him with diligent mind to be seeking *mokṣa* ', C.

93. a. °mānas, A. ab. prahvai vvinayānatapūrttibhiḥ, A ; rab-tu (for rab-dud or rab-btud) de-rnams-kyis . . . rnam-par dul-las rjes-su-ḥjug, T ; ' in all humility . . . never separating themselves ', C. c. tadvaṃśa°, A ; deḥi dbaṅ-gyi, T. d. ivaindriyaiḥ, A.

95. c. e.c. ; vaṣāṇi ṣaṭ kamaprepsur, A ; las ni thob-bzhed lo drug-tu (varṣāṇi ṣaṭ karmaprepsur), T ; ' tranquil (*śānta*) and meditating in trance, so he passed six years ', C.

देहादपचयस्तेन तपसा तस्य यः कृतः ।
स एवोपचयो भूयस्तेजसास्य कृतोऽभवत् ॥ ९७ ॥
कृशोऽप्यकृशकीर्तिश्रीर्ह्लादं चक्रेऽन्यचक्षुषाम् ।
कुमुदानामिव शरच्छुक्लपक्षादिचन्द्रमाः ॥ ९८ ॥
त्वगस्थिशेषो निःशेषैर्मेदःपिशितशोणितैः ।
क्षीणोऽप्यक्षीणगाम्भीर्यः समुद्र इव स व्यभात् ॥ ९९ ॥
अथ कष्टतपःस्पष्टव्यर्थक्लिष्टतनुर्मुनिः ।
भवभीरुरिमां चक्रे बुद्धिं बुद्धत्वकाङ्क्षया ॥ १०० ॥
नायं धर्मो विरागाय न बोधाय न मुक्तये ।
जम्बुमूले मया प्राप्तो यस्तदा स विधिर्ध्रुवः ॥ १०१ ॥
न चासौ दुर्बलेनाप्तुं शक्यमित्यागतादरः ।
शरीरबलवृद्ध्यर्थमिदं भूयोऽन्वचिन्तयत् ॥ १०२ ॥
क्षुत्पिपासाश्रमक्लान्तः श्रमादस्वस्थमानसः ।
प्राप्नुयान्मनसावाप्यं फलं कथमनिर्वृतः ॥ १०३ ॥
निर्वृतिः प्राप्यते सम्यक् सततेन्द्रियतर्पणात् ।
संतर्पितेन्द्रियतया मनःस्वास्थ्यमवाप्यते ॥ १०४ ॥

97. d. kṛto bhavet, A ; byas gyur, T.

98. ab. °śrī hlādaṁ, A.

99. Not in C. b. mmedapiśitaśoṇitaiḥ, A.

100. c. bhavabhīkar (very like rur) imāñ, A ; srid-las ḥjigs-pa, T.

101. d. sa vidhir ddhruvaṁḥ (anusvara added later), A ; de ṅes-pa yin (sa dhruvaḥ, omitting vidhir), T.

102. a. na cāso durbbalenāptaṁ, A. b. nus-pa med phyir gus hoṅs-śiṅ (=na . . . śakyaṁ hy āgatādaraḥ), T.

103. a. skom-pas yoṅs-bcer-zhiṅ (°pipāsāpariklāntaḥ), T. b. asvatth-(corrected to sth)amāsanaḥ, A ; raṅ-gnas med-paḥi sems, T. d. ldog-pa med-pa (=anivṛttaḥ), T.

104. a. gnas-pa ḥthob-pa-ste (saṁsthitiḥ prāpyate ?), T.

स्वस्थप्रसन्नमनसः समाधिरुपपद्यते ।
समाधियुक्तचित्तस्य ध्यानयोगः प्रवर्तते ॥ १०५ ॥
ध्यानप्रवर्तनाद्धर्माः प्राप्यन्ते यैरवाप्यते ।
दुर्लभं शान्तमजरं परं तदमृतं पदम् ॥ १०६ ॥
तस्मादाहारमूलोऽयमुपाय इतिनिश्चयः ।
आहारकरणे धीरः कृत्वामितमतिर्मतिम् ॥ १०७ ॥
स्नातो नैरञ्जनातीरादुत्ततार शनैः कृशः ।
भक्त्यावनतशाखाग्रैर्दत्तहस्तस्तटद्रुमैः ॥ १०८ ॥
अथ गोपाधिपसुता दैवतैरभिचोदिता ।
उद्भूतहृदयानन्दा तत्र नन्दबलागमत् ॥ १०९ ॥
सितशङ्खोज्ज्वलभुजा नीलकम्बलवासिनी ।
सफेनमालानीलाम्बुर्यमुनेव सरिद्वरा ॥ ११० ॥
सा श्रद्धावर्धितप्रीतिर्विकसल्लोचनोत्पला ।
शिरसा प्रणिपत्यैनं ग्राहयामास पायसम् ॥ १११ ॥
कृत्वा तदुपभोगेन प्राप्तजन्मफलां स ताम् ।
बोधिप्राप्तौ समर्थोऽभूत्संतर्पितषडिन्द्रियः ॥ ११२ ॥

107. ab. yam apā iti (one syllable short), A; ḥdi ni thabs zhes, T. c. āsu(? corrected to hā ?)rakaraṇe dhā(?ī?)raḥ, A; bzaḥ-ba byed-la brtan-pa ni, T.

108. a. nīrañjanā°, A. d. taṭaṁdramaiḥ, A; ḥgram-gyi ljon-śiṅ, T (see note in translation).

109. b. devatair, A.

110. ab. °śaṁkhojvalabhujā līla°, A; sṅon-po, T.

111. a. sā śrarddhā°, A. b. °locanātpalā, A. c. sirasā pratapaty enaṁ, A; de-la mgo-yis rab-btud-nas, T; 'she bowed her head at the Bodhisattva's feet', C.

112. c. bodhiprāpto, A.

पर्याप्ताप्यानमूर्तिश्च सार्धं स्वयशसा मुनिः ।
कान्तिधैर्ये बभारैकः शशाङ्कार्णवयोर्द्वयोः ॥ ११३ ॥

आवृत्त इति विज्ञाय तं जहुः पञ्च भिक्षवः ।
मनीषिणमिवात्मानं निर्मुक्तं पञ्च धातवः ॥ ११४ ॥

व्यवसायद्वितीयोऽथ शाद्वलास्तीर्णभूतलम् ।
सोऽश्वत्थमूलं प्रययौ बोधाय कृतनिश्चयः ॥ ११५ ॥

ततस्तदानीं गजराजविक्रमः
पदस्वनेनानुपमेन बोधितः ।
महामुनेरागतबोधिनिश्चयो
जगाद कालो भुजगोत्तमः स्तुतिम् ॥ ११६ ॥

यथा मुने त्वच्चरणावपीडिता
मुहुर्मुहुर्निष्टनतीव मेदिनी ।
यथा च ते राजति सूर्यवत्प्रभा
ध्रुवं त्वमिष्टं फलमद्य भोक्ष्यसे ॥ ११७ ॥

113. b. sārddha suyasasā, A ; raṅ-gi grags bcas, T. c. dhaiye kabhāraikaḥ, A ; brtan-pa gcig-pos bzuṅ, T. d. śaśāṁkārṇnavadvardvayoḥ, A ; nus-gyur rgya-mtsho gñis-dag-gi (śaśākārṇavayor dvayoḥ), T.

114. b. jahruḥ, A ; dor, T. d. grol-ba-la (nirmuktau ?), T.

115. b. śāḍvalā°, A ; rtsva ḥjam bkram-paḥi (śādvalākīrṇa°), T.

116. a. tadīnā (corrected to tadānīṁ), A. ab. padasvamenā°, A ; ḥgros-mṅaḥ-baḥi dpe-med zabs-kyi sgra-yis (°vikramapadasvanenānupamena), T ; 'stepping like a lion (mṛgarāja°?), at every step the earth was shaken and moved', C. d. bhujagottama, A.

117. b. mmuhu. nistanatīva, A. c. rājani, A ; sṅan-ba-ste, T. d. dhruva, A. ḥdod-paḥi go-ḥphaṅ mkhyen-pa ñid (iṣṭaṁ padam eva bhotsyase, or bhakṣyase ?), T.

यथा भ्रमन्त्यो दिवि चाषपङ्क्तयः
प्रदक्षिणं त्वां कमलाक्ष कुर्वते ।
यथा च सौम्या दिवि वान्ति वायव-
स्त्वमद्य बुद्धो नियतं भविष्यसि ॥ ११८ ॥

ततो भुजङ्गप्रवरेण संस्तुत-
स्तृणान्युपादाय शुचीनि लावकात् ।
कृतप्रतिज्ञो निषसाद बोधये
महातरोर्मूलमुपाश्रितः शुचेः ॥ ११९ ॥

ततः स पर्यङ्कमकम्प्यमुत्तमं
बबन्ध सुप्तोरगभोगपिण्डितम् ।
भिनद्मि तावद्भुवि नैतदासनं
न यामि यावत्कृतकृत्यतामिति ॥ १२० ॥

ततो ययुर्मुदमतुलां दिवौकसो
ववाशिरे न मृगगणाः न पक्षिणः ।
न सस्वनुर्वनतरवोऽनिलाहताः
कृतासने भगवति निश्चितात्मनि ॥ १२१ ॥

इति बुद्धचरिते महाकाव्येऽराडदर्शनो नाम द्वादशः सर्गः ॥ १२ ॥

118. a. cāya(very like sa)paṅktayaḥ, A; khug-rtaḥi phreṅ-ba-rnams, T; 'five hundred blue kites in flocks', C. cd. vānta vāy(?v?)ayaḥ tvam, A; rluṅ-rnams . . . ḥgro-ba-ste khyod-kyis (yānti vāyavas tvam), T.

119. a. sa stutas, A; yaṅ-dag bstod-pa, T. b. lco-ga-las (lābakāt), T.

120. a. payaṅkanu(corrected to ma)kampyam, A. d. tāvat, A; ji-srid, T.

121. a. divokaso, A. b. vavāsire ṇa (corrected on margin to na), A; gnas-par ma-gyur (na vavāsire, to vas, 'dwell'!), T; 'one and all the beasts and birds were quiet and uttered no sound at all', C. d. kṛtātmane, A; gdan mdzad, T.

## CANTO XIII

तस्मिन्विमोक्षाय कृतप्रतिज्ञे राजर्षिवंशप्रभवे महर्षौ ।
तत्रोपविष्टे प्रजहर्ष लोकस्तत्रास सद्धर्मरिपुस्तु मारः ॥ १ ॥
यं कामदेवं प्रवदन्ति लोके चित्रायुधं पुष्पशरं तथैव ।
कामप्रचाराधिपतिं तमेव मोक्षद्विषं मारमुदाहरन्ति ॥ २ ॥
तस्यात्मजा विभ्रमहर्षदर्पा-
स्तिस्रोऽरतिप्रीतितृषश्च कन्याः ।
पप्रच्छुरेनं मनसो विकारं
स तांश्च ताश्चैव वचोऽभ्युवाच ॥ ३ ॥
असौ मुनिर्निश्चयवर्म बिभ्रत्सत्त्वायुधं बुद्धिशरं विकृष्य ।
जिगीषुरास्ते विषयान्मदीयान्तस्मादयं मे मनसो विषादः ॥ ४ ॥

1. a. tasmāya kṛta° (three syllables short), A; der ni rnam-par-thar-phyir dam-bcaḥ mdzad-pa-na, T; 'established every firm vow that he would accomplish the path of liberation', C. b. rājarṣivaśa°, A. c. tratropa°, A. d. der ni . . . gyur-te (divides tatra=āsa), T.

2. a. ya kāma°, A. d. mokṣadviyam, A; thar-paḥi dgra-bo, T; 'hating those who strive for liberation', C.

3. b. e.c.; A, T and apparently C omit the avagraha. c. papracchur ena, A. d. vaco bhyuthāsa (meant for bhyuvāca ?), A; tshig mnon-par-smras, T.

4. a. nniścayadharmma bibhrata, A; ṅes-paḥi go-cha-rnams gzuṅ-zhin T. b. bsdogs-byas-nas ('making ready', ? viṣajya), T; 'grasping', C. c. jigīṣuc āste, A. d. gaṅ-phyir . . rnam-par-ḥgyur (yasmād . . . vikāraḥ), T.

यदि ह्यसौ मामभिभूय याति लोकाय चाख्यात्यपवर्गमार्गम् ।
शून्यस्ततोऽयं विषयो ममाद्य वृत्ताच्च्युतस्येव विदेहभर्तुः ॥ ५ ॥
तद्यावदेवैष न लब्धचक्षुर्मद्गोचरे तिष्ठति यावदेव ।
यास्यामि तावद्व्रतमस्य भेत्तुं सेतुं नदीवेग इवातिवृद्धः ॥ ६ ॥
ततो धनुः पुष्पमयं गृहीत्वा शरान् जगन्मोहकरांश्च पञ्च ।
सोऽश्वत्थमूलं ससुतोऽभ्यगच्छदस्वास्थ्यकारी मनसः प्रजानाम् ॥ ७ ॥
अथ प्रशान्तं मुनिमासनस्थं पारं तितीर्षुं भवसागरस्य ।
विषज्य सव्यं करमायुधाग्रे क्रीडन् शरेणेदमुवाच मारः ॥ ८ ॥
उत्तिष्ठ भोः क्षत्रिय मृत्युभीत चर स्वधर्मं त्यज मोक्षधर्मम् ।
बाणैश्च यज्ञैश्च विनीय लोकं लोकात्पदं प्राप्नुहि वासवस्य ॥ ९ ॥

पन्था हि निर्यातुमयं यशस्यो
यो वाहितः पूर्वतमैर्नरेन्द्रैः ।
जातस्य राजर्षिकुले विशाले
भैक्षाकमश्लाघ्यमिदं प्रपत्तुम् ॥ १० ॥

5. a. yadi hṛ(?hya?)sau, A. c. śūnyas vato 'yam, A.

7. b. kun-tu rmoṅs-par byed-paḥi mdaḥ lṅa-rnams bzuṅ-nas (=saṁmohakarān śarān pañca gṛhītvā), T.

8. a. munim ātmasaṁtham, A ; thub-pa . . gdan-la bzhugs-pa-la, T. b. srid-pa ḥkhor-baḥi (=bhavasaṁsārasya), T. c. savya, A. brduṅs-nas (vihatya ?), T.

9. a. utiṣtha, A. c. bāṇeś ca (gap for three missing characters) vinīya lokān, A ; mdaḥ daṅ mchod-sbyin-rnams-kyis ḥjig-rten pham-byas-nas(=text, but vijitya for vinīya ?), T. d. lokān parān prāpnuhi, A ; ḥjig-rten-dag-nas . . . go-ḥphaṅ thob-par mdzod, T ; 'practise fighting, alms, happiness and power(?) ; moderating-subduing (vinīya) everything in the world, thereafter obtain the joys of a heavenly birth', C.

10. a. yasasyo, A. d. bhaikṣyākam, A.

अथाद्य नोत्तिष्ठसि निश्चितात्मन्
भव स्थिरो मा विमुचः प्रतिज्ञाम् ।
मयोद्यतो ह्येष शरः स एव
यः शूर्पके मीनरिपौ विमुक्तः ॥ ११ ॥

स्पृष्टः स चानेन कथंचिदैडः सोमस्य नप्ताप्यभवद्विचित्तः ।
स चाभवच्छन्तनुरस्वतन्त्रः क्षीणे युगे किं बत दुर्बलोऽन्यः ॥ १२ ॥

तत्क्षिप्रमुत्तिष्ठ लभस्व संज्ञां बाणो ह्ययं तिष्ठति लेलिहानः ।
प्रियाविधेयेषु रतिप्रियेषु यं चक्रवाकेष्विव नोत्सृजामि ॥ १३ ॥

इत्येवमुक्तोऽपि यदा निरास्थो नैवासनं शाक्यमुनिर्बिभेद ।
शरं ततोऽस्मै विससर्ज मारः कन्याश्च कृत्वा पुरतः सुतांश्च ॥१४॥

तस्मिंस्तु बाणेऽपि स विप्रमुक्ते चकार नास्थां न धृतेश्चचाल ।
दृष्ट्वा तथैनं विषसाद मारश्चिन्तापरीतश्च शनैर्जगाद ॥ १५ ॥

शैलेन्द्रपुत्रीं प्रति येन विद्धो देवोऽपि शम्भुश्चलितो बभूव ।
न चिन्तयत्येष तमेव बाणं किं स्यादचित्तो न शरः स एषः ॥१६॥

तस्मादयं नार्हति पुष्पबाणं न हर्षणं नापि रतेर्नियोगम् ।
अर्हत्ययं भूतगणैरसौम्यैः संत्रासनातर्जनताडनानि ॥ १७ ॥

11. a. notiṣṭhasi, A. d. sūrpp(?yy?)ake, A ; sūrbaka-la, T.

12. a. pṛṣṭaḥ, A ; reg-pa, T ; 'just touched as by a breath of wind', C. c. chāntanur, A.

13. a. utiṣṭha, A. d. çakravākeṣv api, A ; ṅaṅ-pa-rnams-la bzhin-du, T.

15. c. viṣaśāda, A.

16. b. deyaśvi śambhuś, A ; bde-ḥbyuṅ lha yaṅ, T. d. śaraḥ sa eva, Gawroński.

•17. a. ayaṁ nārhasi, A ; ḥdi ḥos-pa ma-yin-zhiṅ, T. b. rato niyogaṁ, A ; . . . sbyor-ba (two syllables short, niyogam), T ; 'it is not by means of . . . these three Devī daughters of mine', C. c. asyai(? for sau)myaiḥ, A ; zhi-ba ma-yin, T.

सस्मार मारश्च ततः स्वसैन्यं
विघ्नं शमे शाक्यमुनेश्चिकीर्षन् ।
नानाश्रयाश्चानुचराः परीयुः
शलद्रुमप्रासगदासिहस्ताः ॥ १८ ॥

वराहमीनाश्वखरोष्ट्रवक्त्रा व्याघ्रर्क्षसिंहद्विरदाननाश्च ।
एकेक्षणा नैकमुखास्त्रिशीर्षा लम्बोदराश्चैव पृषोदराश्च ॥ १९ ॥

अजानुसक्था घटजानवश्च दंष्ट्रायुधाश्चैव नखायुधाश्च ।
करङ्कवक्त्रा बहुमूर्तयश्च भग्नार्धवक्त्राश्च महामुखाश्च ॥ २० ॥

भस्मारुणा लोहितबिन्दुचित्राः खट्वाङ्गहस्ता हरिधूम्रकेशाः ।
लम्बस्रजो वारणलम्बकर्णाश्चर्माम्बराश्चैव निरम्बराश्च ॥ २१ ॥

श्वेतार्धवक्त्रा हरितार्धकायास्ताम्राश्च धूम्रा हरयोऽसिताश्च ।
व्यालोत्तरासङ्गभुजास्तथैव प्रघुष्टघण्टाकुलमेखलाश्च ॥ २२ ॥

18. b. e.c.; vighnaṁ same śākyamune cikīrsan, A, śākya thub-pa-ḥ bgegs ni mñam-por byed ḥdod-po (vighnaṁ same, or samaṁ, śākyamuneś cikīrṣan), T. c. sna-tshogs bsam-pa (nānāśayāś ?), T. d. e.c.; (parīyuḥ) valadruma°, A; śiṅ-rtse ljon-śiṅ-rtse gsum-mdun (two syllables in excess, =?), T; ' grasping lances, holding knives and swords, grasping trees ', C; śara°, Co.

19. a. T omits aśva (reading varāhamīnāś ca ?). d. daṅ gsus-pa che-ba-rnams (mahodarāś ca ?), T; ' some with great bellies and long bodies ', C; kṛśodarāś ca, Windisch.

20. a. e.c. Lüders and Kern; ajāmusakthā, A; brla-rnams pus-moḥi bar-du (ājānusakthā), T. b. draṣtrā°, A. c. kabandhahastā, A; keṅ-rus gdoṅ-can, T; ' some with faces that had neither heads nor eyes ' (or ' without heads, eyes (var. breasts), or faces '), C.

21. a. tāmrāruṇā, A; thal-skya-rnams, T; ' some became ash-earth colour ', C. c. ḥphoṅs ḥphyaṅ-rnams (=lambasphico, Weller amends to ḥphreṅ ḥphyaṅ-rnams=text), T; ' some with mountainous lumps on their backs ', C. glaṅ-poḥi rna-baḥi rna-ba-rnams (vāraṇakarṇakarṇāś), T.

22. b. dhūmra, A. ljaṅ-khu dkar-po-rnams (harayaḥ sitāś ca), T. c. sbrul-gyi śam-thabs-rnams (vyālāntarāsaṅga° ?), T.

तालप्रमाणाश्च गृहीतशूला दंष्ट्राकरालाश्च शिशुप्रमाणाः ।
उरभ्रवक्त्राश्च विहंगमाक्षा मार्जारवक्त्राश्च मनुष्यकायाः ॥ २३ ॥
प्रकीर्णकेशाः शिखिनोऽर्धमुण्डा रक्ताम्बरा व्याकुलवेष्टनाश्च ।
प्रहृष्टवक्त्रा भृकुटीमुखाश्च तेजोहराश्चैव मनोहराश्च ॥ २४ ॥
केचिद्व्रजन्तो भृशमाववल्गुरन्योऽन्यमापुप्लुविरे तथान्ये ।
चिक्रीडुराकाशगताश्च केचित्केचिच्च चेरुस्तरुमस्तकेषु ॥ २५ ॥
ननर्त कश्चिद्भ्रमयंस्त्रिशूलं कश्चिद्विपुस्फूर्ज गदां विकर्षन् ।
हर्षेण कश्चिद्वृषवन्ननर्द कश्चित्प्रजज्वाल तनूरुहेभ्यः ॥ २६ ॥
एवंविधा भूतगणाः समन्तात्तद्बोधिमूलं परिवार्य तस्थुः ।
जिघृक्षवश्चैव जिघांसवश्च भर्तुर्नियोगं परिपालयन्तः ॥ २७ ॥
तं प्रेक्ष्य मारस्य च पूर्वरात्रे शाक्यर्षभस्यैव च युद्धकालम् ।
न द्यौश्चकाशे पृथिवी चकम्पे प्रजज्वलुश्चैव दिशः सशब्दाः ॥२८॥
विष्वग्ववौ वायुरुदीर्णवेगस्तारा न रेजुर्न बभौ शशाङ्कः ।
तमश्च भूयो विततान रात्रिः सर्वे च संचुक्षुभिरे समुद्राः ॥ २९ ॥

23. Not in C. b. draṁṣtrā°, A. c. vihaṁgamāś ca, A ; bya-yi mig-can-rnams, T.

24. a. ral-pa daṅ byi-bo-rnams (śikhino 'tha muṇḍā ?), T. b. rajvambarā, A ; gos dmar-rnams, T. d. 'Some snatching men's lives' (vayoharāś ca ?), C.

25. b. e.c. Cowell ; āpuplutire, A ; C and T ambiguous.

26. a. bhramayan triśūlaṁ, A. b. e.c. Lüders ; kaścid va (or dha) pusphūrja, A ; T ambiguous.

27. b. e.c. Cowell ; taṁ bodhimulaṁ, A ; byaṅ-chub sems-dpaḥ de-la (taṁ bodhisattvaṁ), T ; 'surrounded the bodhi tree', C. c. 'Others again wished to eat him up' (jighatsavaś ca ?), C. d. bharttu nniyogam, A. rab-tu-skyoṅ-bar byed-pa-ste (pratipālayantaḥ ?), T.

28. a. prekṣyā, A. c. na dyo cakāśe, A ; na-mkhaḥ gsal-ba ma-yin, T.

29. a. viśvag, A. b. reju nna, A. c. e.c. Cappeller ; vitatāra rātri (or tre, top of letter cut off), A ; mtshan-mor . . . rgyas gyur-la (vitatāna rātrau ?), T.

महीभृतो धर्मपराश्च नागा महामुनेर्विघ्नममृष्यमाणाः ।
मारं प्रति क्रोधविवृत्तनेत्रा निःशश्वसुश्चैव जजृम्भिरे च ॥ ३० ॥
शुद्धाधिवासा विबुधर्षयस्तु सद्धर्मसिद्ध्यर्थमभिप्रवृत्ताः ।
मारेऽनुकम्पां मनसा प्रचक्रुर्विरागभावात्तु न रोषमीयुः ॥ ३१ ॥
तद्बोधिमूलं समवेक्ष्य कीर्णं हिंसात्मना मारबलेन तेन ।
धर्मात्मभिर्लोकविमोक्षकामैर्बभूव हाहाकृतमन्तरीक्षे ॥ ३२ ॥
उपप्लवं धर्मविधेस्तु तस्य दृष्ट्वा स्थितं मारबलं महर्षिः ।
न चुक्षुभे नापि ययौ विकारं मध्ये गवां सिंह इवोपविष्टः ॥३३॥
मारस्ततो भूतचमूमुदीर्णामाज्ञापयामास भयाय तस्य ।
स्वैः स्वैः प्रभावैरथ सास्य सेना तद्धैर्यभेदाय मतिं चकार ॥ ३४ ॥

केचिच्चलन्नैकविलम्बिजिह्वा-
स्तीक्ष्णाग्रदंष्ट्रा हरिमण्डलाक्षाः ।
विदारितास्याः स्थिरशङ्कुकर्णाः
संत्रासयन्तः किल नाम तस्थुः ॥ ३५ ॥

तेभ्यः स्थितेभ्यः स तथाविधेभ्यः रूपेण भावेन च दारुणेभ्यः ।
न विव्यथे नोद्विविजे महर्षिः क्रीडत्सुबालेभ्य इवोद्धतेभ्यः ॥३६॥

30. a. chos-dag ḥdzin-paḥi (dharmadharāś, or °bhṛtaś), T. b. mahāmunir, A. °mānāh, A.

31. a. śuddhāddhivāsā, A. b. °artham iva pravṛttāḥ, A ; don-du mṅon-par-zhugs-pa-rnams, T. c. °kampā, A.

32. c. dharmmātmabhi lloka°, A. d. antarikṣaṁ (anusvara added later), A ; na-mkhaḥ-dag-la, T.

33. a. dharmmavis tu (one syllable short), A ; chos-kyi cho-ga, T. d. gāvāṁ, A.

34. cd. senān taddhairya°, A.

35. a. calaṁnnaika°, A. ab. °jihvā tīkṣṇogradraṁṣṭrā, A ; mche-baḥi rtse-mo-rnams rno, T.

कश्चित्ततो रोषविवृत्तदृष्टिस्तस्मै गदामुद्यमयांचकार ।
तस्तम्भ बाहुः सगदस्ततोऽस्य पुरंदरस्येव पुरा सवज्रः ॥ ३७ ॥

केचित्समुद्यम्य शिलास्तरूंश्च
विषेहिरे नैव मुनौ विमोक्तुम् ।
पेतुः सवृक्षाः सशिलास्तथैव
वज्रावभग्ना इव विन्ध्यपादाः ॥ ३८ ॥

कैश्चित्समुत्पत्य नभो विमुक्ताः शिलाश्च वृक्षाश्च परश्वधाश्च ।
तस्थुर्नभस्येव न चावपेतुः संध्याभ्रपादा इव नैकवर्णाः ॥ ३९ ॥

चिक्षेप तस्योपरि दीप्तमन्यः कडङ्गरं पर्वतशृङ्गमात्रम् ।
यन्मुक्तमात्रं गगनस्थमेव तस्यानुभावाच्छतधा पफाल ॥ ४० ॥

कश्चिज्ज्वलन्नर्क इवोदितः खादङ्गारवर्षं महदुत्ससर्ज ।
चूर्णानि चामीकरकन्दराणां कल्पात्यये मेरुरिव प्रदीप्तः ॥ ४१ ॥

तद्बोधिमूले प्रविकीर्यमाणमङ्गारवर्षं तु सविस्फुलिङ्गम् ।
मैत्रीविहारादृषिसत्तमस्य बभूव रक्तोत्पलपत्त्रवर्षः ॥ ४२ ॥

शरीरचित्तव्यसनातपैस्तैरेवंविधैस्तैश्च निपात्यमानैः ।
नैवासनाच्छाक्यमुनिश्चचाल स्वनिश्चयं बन्धुमिवोपगुह्य ॥ ४३ ॥

37. a. rości(possibly corrected to dra)vivṛttadṛstis, A; khros-pas lta-byed rnam-ḥgyur-zhiṅ, T. b. tasmai mudām, A; ḥdi-la dbyug-pa, T. d. purāṁdarasyaiva, A.

38. a. samuddamya, A; gyen-du ḥphyar-ba, T.

39. c. e.c. Cowell; ca nāvapetuḥ, A.

40. c. de ni ḥphaṅs-pa (tan mukta°), T.

41. c. °kandarānā, A. d. ḥjig-rten ḥjig-tshe (lokātyaye), T.

42. a. pratikīryamānam, A; rab-tu-rnam-ḥphaṅs-paḥi, T. d. °varṣam, Böhtlingk.

43. b. nipatyamānaiḥ, A; phab-pa, T.

अथापरे निर्जिगिलुर्मुखेभ्यः सर्पान्विजीर्णेभ्य इव द्रुमेभ्यः ।
ते मन्त्रबद्धा इव तत्समीपे न शश्वसुर्नोत्ससृपुर्न चेलुः ॥ ४४ ॥
भूत्वापरे वारिधरा बृहन्तः सविद्युतः साशनिचण्डघोषाः ।
तस्मिन्द्रुमे तत्यजुरश्मवर्षं तत्पुष्पवर्षं रुचिरं बभूव ॥ ४५ ॥
चापेऽथ बाणो निहितोऽपरेण जज्वाल तत्रैव न निष्पपात ।
अनीश्वरस्यात्मनि धूयमानो दुर्मर्षणस्येव नरस्य मन्युः ॥ ४६ ॥
पञ्चेषवोऽन्येन तु विप्रमुक्तास्तस्थुर्नभस्येव मुनौ न पेतुः ।
संसारभीरोर्विषयप्रवृत्तौ पञ्चेन्द्रियाणीव परीक्षकस्य ॥ ४७ ॥
जिघांसयान्यः प्रससार रुष्टो गदां गृहीत्वाभिमुखो महर्षेः ।
सोऽप्राप्तकामो विवशः पपात दोषेष्विवानर्थकरेषु लोकः ॥ ४८ ॥

स्त्री मेघकाली तु कपालहस्ता
कर्तुं महर्षेः किल चित्तमोहम् ।
बभ्राम तत्रानियतं न तस्थौ
चलात्मनो बुद्धिरिवागमेषु ॥ ४९ ॥

कश्चित्प्रदीप्तं प्रणिधाय चक्षुर्नेत्राग्निनाशीविषवद्दिधक्षुः ।
तत्रैव नासीनमृषिं ददर्श कामात्मकः श्रेय इवोपदिष्टम् ॥ ५० ॥

44. a. rnam-par-skyugs-pa-ste (=vijagaruḥ), T; nijagaruḥ, Böhtlingk. d. na sasvasu nnotsasṛjur, A; soṅ-ba ma-yin dbugs-min, T.

45. a. vāridharān, A; chu-ḥdzin chen-po . . . gyur-nas, T.

46. a. vāpe, A; gzhu-la, T. nihato, A; bkod-pa, T. d. durmmarṣaṇasyaiva, A.

47. b. e.c. Kern and Böhtlingk; tasthau nayaty eva, A; nam-mkhar gnas-śiṅ (nabhasy, or viyaty), T.

48. c. so prāptakālo, A; des ni ḥdod-pa ma-thob, T.

49. b. kela mohacittaṁ, A; thugs ni rmoṅs-par byed ces grags, T.

50. b. °vad dhi (or vi) dhakṣuḥ, A; bzhin bsred ḥdod-pas, T. c. tatreva, A. d. ñer-gnas dpal bzhin-du (=śriyam ivopasthitām), T.

गुर्वीं शिलामुद्यमयंस्तथान्यः शश्राम मोघं विहतप्रयत्नः ।
निःश्रेयसं ज्ञानसमाधिगम्यं कायक्लमैर्धर्ममिवाप्तुकामः ॥ ५१ ॥
तरक्षुसिंहाकृतयस्तथान्ये प्रणेदुरुच्चैर्महतः प्रणादान् ।
सत्त्वानि यैः संचुकुचुः समन्ताद्वज्राहता द्यौः फलतीति मत्वा ॥५२॥
मृगा गजाश्चार्तरवान् सृजन्तो विदुद्रुवुश्चैव निलिल्यिरे च ।
रात्रौ च तस्यामहनीव दिग्भ्यः खगा रुवन्तः परिपेतुरार्ताः ॥५३॥
तेषां प्रणादैस्तु तथाविधैस्तैः सर्वेषु भूतेष्वपि कम्पितेषु ।
मुनिर्न तत्रास न संचुकोच रवैर्गरुत्मानिव वायसानाम् ॥ ५४ ॥
भयावहेभ्यः परिषद्गणेभ्यो यथा यथा नैव मुनिर्बिभाय ।
तथा तथा धर्मभृतां सपत्नः शोकाच्च रोषाच्च ससाद मारः ॥५५॥
भूतं ततः किंचिददृश्यरूपं विशिष्टभूतं गगनस्थमेव ।
दृष्ट्वर्षये द्रुग्धमवैररुष्टं मारं बभाषे महता स्वरेण ॥ ५६ ॥
मोघं श्रमं नार्हसि मार कर्तुं हिंस्रात्मतामुत्सृज गच्छ शर्म ।
नैष त्वया कम्पयितुं हि शक्यो महागिरिर्मेरुरिवानिलेन ॥ ५७ ॥
अप्युष्णभावं ज्वलनः प्रजह्यादापो द्रवत्वं पृथिवी स्थिरत्वम् ।
अनेककल्पाचितपुण्यकर्मा न त्वेव जह्याद्व्यवसायमेषः ॥ ५८ ॥

51. a. gurvvī, A. udyamayan tathā°, A.

52. a. tarakṣusihā°, A.

53. a. cāt(?bh?)uravān, A: ñam-thag skad, T. b. vidrudruvuś, A. ḥthig-pa ñid-du gyur-pa-ste (eva vililyire ?), T.

55. a. °ganebhyo, A. d. sasāra, A; bdud-rnams . . . byer-ba-ḥo ('the Māras dispersed',=?), T; 'all the Māras were exceedingly dejected', C; 'aroused in his mind (or, their minds), melancholy increased and he (or they) became angry', FP; mamāra, Böhtlingk; śaśāra, Kern.

56. c. dṛṣṭvārṣaye, A.

58. a. jvalana, A. d. vyavasām eṣaḥ (one syllable short), A; ḥdis ni nan-tan, T.

यो निश्चयो ह्यस्य पराक्रमश्च तेजश्च यद्या च दया प्रजासु ।
अप्राप्य नोत्थास्यति तत्त्वमेष तमांस्यहत्वेव सहस्ररश्मिः ॥ ५९ ॥

काष्ठं हि मथ्नन् लभते हुताशं
भूमिं खनन्विन्दति चापि तोयम् ।
निर्बन्धिनः किंचन नास्त्यसाध्यं
न्यायेन युक्तं च कृतं च सर्वम् ॥ ६० ॥

तल्लोकमार्तं करुणायमानो रोगेषु रागादिषु वर्तमानम् ।
महाभिषङ् नार्हति विघ्नमेष ज्ञानौषधार्थं परिखिद्यमानः ॥ ६१ ॥

हृते च लोके बहुभिः कुमार्गैः सन्मार्गमन्विच्छति यः श्रमेण ।
स दैशिकः क्षोभयितुं न युक्तं सुदेशिकः सार्थ इव प्रनष्टे ॥ ६२ ॥

सत्त्वेषु नष्टेषु महान्धकारे ज्ञानप्रदीपः क्रियमाण एषः ।
आर्यस्य निर्वापयितुं न साधु प्रज्वाल्यमानस्तमसीव दीपः ॥ ६३ ॥

दृष्ट्वा च संसारमये महौघे मग्नं जगत्पारमविन्दमानम् ।
यश्चेदमुत्तारयितुं प्रवृत्तः कश्चिन्तयेत्तस्य तु पापमार्यः ॥ ६४ ॥

क्षमाशिफो धैर्यविगाढमूलश्चारित्रपुष्पः स्मृतिबुद्धिशाखः ।
ज्ञानद्रुमो धर्मफलप्रदाता नोत्पाटनं ह्यर्हति वर्धमानः ॥ ६५ ॥

59. b. yad yā va dayā, A. c. nocchāsyati, A; ldaṅ ma-yin, T. d. tamāsy, A. °rasmiḥ, A.

60. c. nāsya sādhyan (possibly meant for nāṣty asādhyan), A; bsgrub-pa ma-yin . . . med, T.

62. b. śramena, A; zhi-bas (śamena), T. d. praṇaṣṭe, A.

64. a. mahoghe, A. c. pravattaḥ, A. d. kaś cinna(rewritten)yet, A; su-yi sems-pa byed, T. T omits tu; tasya nu, Kern.

65. a. veryavigāḍha°, A; brtan-paḥi . . . brtan-pa, T. c. dharmma-pradātā (two syllables short), A; chos-kyi ḥbras-bu ster-pa-po, T.

बद्धां दृढैश्चेतसि मोहपाशैर्यस्य प्रजां मोक्षयितुं मनीषा ।
तस्मिन् जिघांसा तव नोपपन्ना श्रान्ते जगद्बन्धनमोक्षहेतोः ॥६६॥
बोधाय कर्माणि हि यान्यनेन कृतानि तेषां नियतोऽद्य कालः ।
स्थाने तथास्मिन्नुपविष्ट एष यथैव पूर्वे मुनयस्तथैव ॥ ६७ ॥
एषा हि नाभिर्वसुधातलस्य कृत्स्नेन युक्ता परमेण धाम्ना ।
भूमेरतोऽन्योऽस्ति हि न प्रदेशो वेगं समाधेर्विषहेत योऽस्य ॥६८॥
तन्मा कृथाः शोकमुपेहि शान्तिं मा भून्महिम्ना तव मार मानः ।
विश्रम्भितुं न क्षममध्रुवा श्रीश्चले पदे विस्मयमभ्युपैषि ॥ ६९ ॥

ततः स संश्रुत्य च तस्य तद्वचो
महामुनेः प्रेक्ष्य च निष्प्रकम्पताम् ।
जगाम मारो विमनो हतोद्यमः
शरैर्जगच्चेतसि यैर्विहन्यते ॥ ७० ॥

गतप्रहर्षा विफलीकृतश्रमा प्रविद्धपाषाणकडङ्गरद्रुमा ।
दिशः प्रदुद्राव ततोऽस्य सा चमूर्हताश्रयेव द्विषता द्विषच्चमूः ॥७१॥

66. c. nopapannāṁ (anusvara added later), A.

68. a. nābhi vvasudhā°, A. b. paramena, A. d. veśaṁ samādhe vviṣa yo sya (gap for two missing characters), A ; gaṅ-zhig ḥdi-yi tiṅ-ṅe-ḥdzin-gyi śugs bzod-paḥi, T ; ‘ able entirely to bear the wonderful resolution ’, C.

69. a. kṛthā (visarga added above line) sokam, A ; khro-bar (roṣam, krodham), T. c. visrambhituṁ, A. d. kiṁ padam at(?bh?)yupemi, A ; rgyags-par mṅon-par-ñer-ḥgro-zhiṅ (=text, Weller conjectures ḥgro ci=kiṁ madam), T.

70. b. prekṣa, A. c. matodyamaḥ, A ; ḥbad-pa bcom-zhiṅ, T. d. e.c. Böhtlingk ; vihanyase, A ; T ambiguous.

71. a. gatapaharṣā, A. d. dgrar-gyur dgra-boḥi dpuṅ (dviṣatī dviṣac-camūḥ, or amend to dgra-gyis dgra-boḥi dpuṅ=text), T.

द्रवति सपरिपक्षे निर्जिते पुष्पकेतौ
जयति जिततमस्के नीरजस्के महर्षौ ।
युवतिरिव सहासा द्यौश्चकाशे सचन्द्रा
सुरभि च जलगर्भं पुष्पवर्षं पपात ॥ ७२ ॥

इति बुद्धचरिते महाकाव्येऽश्वघोषकृते मारविजयो नाम त्रयोदशः सर्गः ॥ १३ ॥

72. c. cakāse, A. d. puṣpavarṣa, A. A and T add the following spurious verse :—

*Tathāpi pāpīyase nirjite gate*
*diśaḥ praseduḥ prababhau niśākaraḥ* |
*Divo nipetur bhuvi puṣpavṛṣṭayo*
*rarāja yoṣeva vikalmaṣā niśā* ||

b. praśeduḥ, A. c. °vṛṣṭaye, A.

Colophon : °kāvye aśva°, A.

## CANTO XIV

ततो मारबलं जित्वा धैर्येण च शमेन च ।
परमार्थं विजिज्ञासुः स दध्यौ ध्यानकोविदः ॥ १ ॥
सर्वेषु ध्यानविधिषु प्राप्य चैश्वर्यमुत्तमम् ।
सस्मार प्रथमे यामे पूर्वजन्मपरंपराम् ॥ २ ॥
अमुत्राहमयं नाम च्युतस्तस्मादिहागतः ।
इति जन्मसहस्राणि सस्मारानुभवन्निव ॥ ३ ॥
स्मृत्वा जन्म च मृत्युं च तासु तासूपपत्तिषु ।
ततः सत्त्वेषु कारुण्यं चकार करुणात्मकः ॥ ४ ॥
कृत्वेह स्वजनोत्सर्गं पुनरन्यत्र च क्रियाः ।
अत्राणः खलु लोकोऽयं परिभ्रमति चक्रवत् ॥ ५ ॥
इत्येवं स्मरतस्तस्य बभूव नियतात्मनः ।
कदलीगर्भनिःसारः संसार इति निश्चयः ॥ ६ ॥

1. b. vairyena ca śamana ca, A; brtan daṅ zhi-ba-yis, T. c. paramārthaṁm vi°, A.

2. b. uttamaḥ (corrected to uttamaṁ), A.

3. ab. nāmā bhyutas, A; che-ge-mo bdag miṅ ḥdi ni . . . ḥphos-te (amuko(?) 'ham ayaṁ nāma cyutas), T. d. n(originally s?)asmarī(?ā?)nu°, A.

5. a. kṛtvehaṁ 'sujanotsarggaṁ, A; raṅ-gi skye-bo bor-nas ni (omitting iha, or read ḥdir for ni), T. b. kriyā, A; bya-ba-rnams, T. c. atrāṇa, A.

6. a. smāratas, A.

द्वितीये त्वागते यामे सोऽद्वितीयपराक्रमः ।
दिव्यं लेभे परं चक्षुः सर्वचक्षुष्मतां वरः ॥ ७ ॥
ततस्तेन स दिव्येन परिशुद्धेन चक्षुषा ।
ददर्श निखिलं लोकमादर्श इव निर्मले ॥ ८ ॥
सत्त्वानां पश्यतस्तस्य निकृष्टोत्कृष्टकर्मणाम् ।
प्रच्युतिं चोपपत्तिं च ववृधे करुणात्मता ॥ ९ ॥
इमे दुष्कृतकर्माणः प्राणिनो यान्ति दुर्गतिम् ।
इमेऽन्ये शुभकर्माणः प्रतिष्ठन्ते त्रिपिष्टपे ॥ १० ॥
उपपन्नाः प्रतिभये नरके भृशदारुणे ।
अमी दुःखैर्बहुविधैः पीड्यन्ते कृपणं बत ॥ ११ ॥
पाय्यन्ते क्वथितं केचिदग्निवर्णमयोरसम् ।
आरोप्यन्ते रुवन्तोऽन्ये निष्टप्तस्तम्भमायसम् ॥ १२ ॥
पच्यन्ते पिष्टवत्केचिदयस्कुम्भीष्ववाङ्मुखाः ।
दह्यन्ते करुणं केचिद्दीप्तेष्वङ्गारराशिषु ॥ १३ ॥
केचित्तीक्ष्णैरयोदंष्ट्रैर्भक्ष्यन्ते दारुणैः श्वभिः ।
केचिद्धृष्टैरयस्तुण्डैर्वायसैरायसैरिव ॥ १४ ॥
केचिद्दाहपरिश्रान्ताः शीतच्छायाभिकाङ्क्षिणः ।
असिपत्रवनं नीलं बद्धा इव विशन्त्यमी ॥ १५ ॥

7. a. dvitī tv āgate (one syllable short), A ; gñis-pa byuṅ-ba-na, T.
8. d. iva rmmale (one syllable short), A ; dri-ma med-pa, T.
10. a. duskṛtakarmmāṇi, A ; sdig-paḥi las-can-rnams, T ; 'the evil-livers', C. c. ime ṇye, A.
11. a. upapannā, A. c. duḥkbai bahuvidheḥ, A.
13. b. ayaṁkumbhīṣv, A. cd. keci dī(corrected to ddī ?)pteṣv, A.
14. ab. ayodraṁṣtrair bhakṣante dāruṇaiḥ svabhiḥ, A.
15. a. ked dāha° (one syllable short), A. c. aśipatravana, A.

पाट्यन्ते दारुवत्केचित्कुठारैर्बहुबाहवः ।
दुःखेऽपि न विपद्यन्ते कर्मभिर्धारितासवः ॥ १६ ॥
सुखं स्यादिति यत्कर्म कृतं दुःखनिवृत्तये ।
फलं तस्येदमवशैर्दुःखमेवोपभुज्यते ॥ १७ ॥
सुखार्थमशुभं कृत्वा य एते भृशदुःखिताः ।
आस्वादः स किमेतेषां करोति सुखमण्वपि ॥ १८ ॥
हसद्भिर्यत्कृतं कर्म कलुषं कलुषात्मभिः ।
एतत्परिणते काले क्रोशद्भिरनुभूयते ॥ १९ ॥
यद्येवं पापकर्माणः पश्येयुः कर्मणां फलम् ।
वमेयुरुष्णं रुधिरं मर्मस्वभिहता इव ॥ २० ॥
इमेऽन्ये कर्मभिश्चित्रैश्चित्तविस्पन्दसंभवैः ।
तिर्यग्योनौ विचित्रायामुपपन्नास्तपस्विनः ॥ २१ ॥

16. c. duḥkhe nipipadya (one character torn off, and one syllable short), A; sdug-bsṅal-na yaṅ rnam mi-smin (so Peking edition, smrin Weller), T. d. karmmabhim vā(corrected on margin to r ddhā)ritāśavaḥ, A.

17. b. duḥkhanivarttaye, A; sdug-bsṅal bzlog-paḥi don-ched-du, T.

18. c. āśvādaḥ, A. karā (top of this character and all next one torn off) sukham anv api, A; bde-ba phra-mo (ma Weller) yaṅ byed-dam, T.

19. b. kalāsātmabhiḥ, A; sdig-paḥi bdag-ñid, T.

20. a. yady eva, A; gal-te de-ltar, T. c. skyen-par khrag ni skyug-pa ñid (vameyus tūrṇam rudhiram ?), T. d. Half of syllable rmma torn off, A. A and T add the following spurious verse here :—

*Śārīrebhyo 'pi duḥkhebhyo nārakebhyo manasvinaḥ |*
*Anāryaiḥ saha saṁvāso mama kṛcchratamo mataḥ ||*

d. kṛcchu(?)tamo, A.

21. a. ime nyeḥ, A. b. °viṣy(or p)anda°, A; rnam-gyo-las, T. c. vicitrāyam, A. d. tapaśvinaḥ, A.

मांसत्वग्वालदन्तार्थं वैरादपि मदादपि ।
हन्यन्ते कृपणं यत्र बन्धूनां पश्यतामपि ॥ २२ ॥

अशक्नुवन्तोऽप्यवशाः क्षुत्तर्षश्रमपीडिताः ।
गोऽश्वभूताश्च वाह्यन्ते प्रतोदक्षतमूर्तयः ॥ २३ ॥

वाह्यन्ते गजभूताश्च बलीयांसोऽपि दुर्बलैः ।
अङ्कुशक्लिष्टमूर्धानस्ताडिताः पादपार्ष्णिभिः ॥ २४ ॥

सत्स्वप्यन्येषु दुःखेषु दुःखं यत्र विशेषतः ।
परस्परविरोधाच्च पराधीनतयैव च ॥ २५ ॥

खस्थाः खस्थैर्हि बाध्यन्ते जलस्था जलचारिभिः ।
स्थलस्थाः स्थलसंस्थैश्च प्राप्य चैवेतरेतरैः ॥ २६ ॥

उपपन्नास्तथा चेमे मात्सर्याक्रान्तचेतसः ।
पितृलोके निरालोके कृपणं भुञ्जते फलम् ॥ २७ ॥

सूचीछिद्रोपममुखाः पर्वतोपमकुक्षयः ।
क्षुत्तर्षजनितैर्दुःखैः पीड्यन्ते दुःखभागिनः ॥ २८ ॥

22. a. °dantārtha, A. b. chags-pa-las-sam (rāgād api), T. c. kṛpa (gap for missing letter) yatra, A ; gaṅ-du sñiṅ-brje-bar, T.

24. d. °pāṣṇibhiḥ, A.

25. a. satsu py, A. b. vi(one character torn off)ṣataḥ, A ; khyad-par-ldan (viśeṣavat), T.

26. c. lalasaṁsthais, A ; skam-gnas-rnams-kyis, T. d. e.c. ; prāpya revai(these two characters marked for error)taretaraiḥ, A ; phan-tshun-du ni rab-phrad-nas (=itaretaraiḥ prāpya), T ; prāpyante cetaretaraih, Co. ; tāpyante, Cappeller.

27. ab. tathā ce(two characters torn off)tsaryā°; A ; ser-snas . . . ḥdi-rnams de-bzhin-du, T.

28. cd. °janitai duḥkhaiḥ pīḍyate, A.

आश्रया समतिक्रान्ता धार्यमाणाः स्वकर्मभिः ।
लभन्ते न ह्यमी भोक्तुं प्रविद्धान्यशुचीन्यपि ॥ २९ ॥
पुरुषो यदि जानीत मात्सर्यस्येदृशं फलम् ।
सर्वथा शिबिवद्दद्याच्छरीरावयवानपि ॥ ३० ॥
इमेऽन्ये नरकप्रख्ये गर्भसंज्ञेऽशुचिह्रदे ।
उपपन्ना मनुष्येषु दुःखमर्छन्ति जन्तवः ॥ ३१ ॥

29. A and T transpose this and the next verse. b. sūkarmmabhiḥ, A ; raṅ-gi las-rnams-kyis, T. d. pravrddhāni, A ; bor-baḥi, T ; 'impure food and thrown away', C.

30. ab. jaṁ(two characters torn off)ātsarya(bottoms only of these letters preserved)sye°, A ; ser-snaḥi . . . śes-na, T.

31. ab. narakapakhye garbha(one character torn off)jñe, A ; dmyal-ba daṅ mtshuṅs-paḥi mṅal miṅ, T.

# APPENDIX.

## The *Buddhacarita* and the *Fo pen hsing chi ching.*

The following table gives the verses of the *Buddhacarita* which are quoted in the *Fo pen hsing chi ching*, with references to volume III of the Taishō Issaikyō edition of the Chinese Tripiṭaka and to Beal's translation in *The Romantic Legend of Śākya Buddha* :—

| Buddhacarita. | Fo pen hsing chi ching. | Beal. | REMARKS. |
|---|---|---|---|
| i, 82, 83, 84, 85ab | 701a, 12–19 | 62 | |
| ii, 2 | 702a, 10-11 | 64 | The following *gāthā* possibly reproduces ii, 5. |
| ii, 11ab | 702b, 7-8 | omitted. | |
| ii, 13ab | 702b, 9-10 | omitted. | |
| ii, 17 | 692c, 1-2 | 54 | |
| ii, 26cd | 712c, 13-14 | 92 | Correspondence not quite certain. |
| ii, 27cd | 712c, 15-16 | 92 | |
| iii, 30 | 720b, 20-21 | 109 | |
| iii, 55 | 723b, 4-5 | 118 | |
| iii, 57 | 723b, 14-15 | 119 | |
| iii, 59bcd | 723b, 22-23 | 119 | |
| iv, 9, 11, 12 | 726a, 24–29 | omitted. | Correspondence incomplete and uncertain. |
| iv, 64 | 726c, 17-18 | 125 | |
| iv, 70 | 727a, 1-2 | 125 | |
| iv, 86 | 727a, 13-14 | 126 | Correspondence probable, not certain. |
| iv, 89 | 727a, 19-20 | 126 | |
| v, 18, 19 | 724b, 16–19 | 121 | |
| v, 38 | 724c, 28-29 | omitted. | |
| v, 64, 65 | 729a, 8–11 | 130 | Different version of 65*d*. |
| v, 71 | 731a, 14-15 | 134-35 | |
| vi, 10 | 733c, 25-26 | 140 | Correspondence of second line not clear. |
| vi, 11 | 734a, 17-18 | 141 | |
| vi, 16cd, 17ab | 735a, 24-25 | 143 | |
| vi, 27 | 735b, 26-27 | omitted. | |
| vi, 46, 47, 48 | 736a, 7–12 | omitted. | Different version of 48*cd*, and seven verses, not found in *Buddhacarita*, added. |
| vi, 54, 55 | 736c, 17–22 | omitted. | |
| vi, 61 | 738a, 7-8 | 145 | |
| vii, 2 | 745a, 18-19 | 153 | *Pāda b* omitted. |
| vii, 7ab, 8cd | 745b, 14-15 | 154 | |

| Buddhacarita. | Fo pen hsing chi ching. | Beal. | Remarks. |
|---|---|---|---|
| vii, 18 | 746b, 10-11 | omitted. | |
| vii, 21 | 746b, 20-21 | 156 | |
| vii, 27 | 746c, 9-10 | 157 | |
| vii, 38 | 747c, 10-11 | omitted. | |
| vii, 58 | 748a, 26-27 | 161 | |
| viii, 2 | 738b, 22-23 | 146 | |
| viii, 11ab | 738c, 23 | 147 | |
| viii, 13ab | 738c, 24 | 147 | |
| viii, 35 | 740c, 23-24 | omitted. | |
| viii, 42cd, 43ab | 741b, 11-12 | 150 | |
| viii, 54 | 740b, 24-25 | omitted. | |
| viii, 69 | 741c, 29 ; 742a, 1 | omitted. | |
| viii, 71 | 742a, 22-23 | omitted. | Correspondence probable, not certain. |
| viii, 72 | 743b, 22-23 | omitted. | |
| viii, 76 | 744b, 16-17 | 151 | |
| viii, 84 | 744c, 11-12 | 151 | Last *pāda* differs. |
| ix, 6 | 748b, 24-25 | 162 | |
| ix, 22 | 749b, 4-5 | 163 | First line differs. |
| ix, 41 | 750a, 7-8 | 164 | |
| ix, 47 | 750a, 28-29 | 165 | |
| ix, 53 | 750b, 25-26 | 165-66 | |
| ix, 62 | 750c, 18-19 | 166 | |
| ix, 71 | 751a, 21-22 | 167-68 | |
| ix, 82 | 751c, 3-4 | 168-69 | |
| x, 15 | 760a, 18-19 | 181 | |
| x, 24 | 760c, 6-7 | 182 | |
| xi, 9 | 761c, 14-15 | 183 | Correspondence exact for first *pāda* only. |
| xi, 10 | 761c, 16-17 | omitted. | |
| xi, 12 | 761c, 20-21 | omitted. | |
| xi, 13 | 761c, 18-19 | omitted. | |
| xi, 17 | 762a, 11–14 | omitted. | |
| xi, 32 | 762b, 15-16 | omitted | |
| xi, 34 | 762b, 21-22 | omitted. | |
| xi, 35 | 753b, 3-4 | omitted. | |
| xi, 57 | 763b, 12-13 | 183 | |
| xi, 59abc | 763b, 21 | 184 | Following line in Chinese entirely different from xi, 59*d*. |
| xi, 67 | 763c, 19-20 | 184 | |
| xi, 72 | 764b, 15-16 | omitted. | Last *pāda* differs slightly. |
| xi, 73 | 764c, 4-5 | 185 | |
| xii, 3 | 752a, 12-13 | 170 | |
| xii, 15 | 753a, 23-24 | omitted. | |
| xii, 65 | 754c, 25-26 | omitted. | Last *pāda* differs slightly. |
| xii, 75 | 755b, 16-17 | omitted. | |
| xii, 83 | 757b, 9-10 | omitted. | |

| Buddhacarita. | Fo pen hsing chi ching. | Beal. | REMARKS. |
|---|---|---|---|
| xii, 120 | 778b, 22-23 | 207 | |
| xiii, 5, 6 | 779b, 9–14 | omitted. | |
| xiii, 28cd, 29bcd | 787b, 26-27 | 222 | |
| xiii, 32 | 787c, 8-9 | 222 | |
| xiii, 36 | 787c, 28-29 | 223 | |
| xiii, 55 | 790c, 11-12 | omitted. | |
| xiii, 58 | 788c, 5-7 | 224 | |
| xiii, 61, 62, 63 | 788c, 8–14*a* | omitted. | |
| xiii, 64 | 788c, 19-20 | omitted. | |
| xiii, 65, 66 | 788c, 14*b*–18 | omitted. | |
| xiii, 67 | 788c, 21-22 | omitted. | |